श्रीभट्टोजिदीक्षितविरचितः

# तन्त्राधिकारिनिर्णयः

सम्पादक :

डॉ० अशोककुमार कालिया

अखिल भारतीय संस्कृत-परिषद

लखनऊ

भट्टोजिदीक्षितविरचितः

# तन्त्राधिकारिनिर्णयः

डॉ० अशोककुमार कालिया



अखिल भारतीय संस्कृत–परिषद्
महात्मा गाँधी मार्ग, हज़रतगंज
लखनऊ—२२६००१

प्रकाशिका :

अखिल भारतीय संस्कृत-परिषद्
महात्मा गाँधी मार्ग
हज़रतगंज
लखनऊ–२२६००१



प्रथम-संस्करण
१९६६

मूल्य :

साधारण-संस्करण ४५.००
विशिष्ट-संस्करण ७५.००

मुद्रक:

प्नार मुद्रक
११७, नज़ीराबाद
लखनऊ–२२६००१

## Publisher's Note

One of the aims and objects of the Akhila Bharatiya Sanskrit Parishad is to make a search of the Sanskrit manuscripts and to publish the more important of them. I am glad to present to the world of scholars the Tantrādhikārinirṇaya of Bhaṭṭoji Dikṣita edited by Dr. Ashok Kumar Kalia. The work has been edited on the basis of a printed text published by Pt. Tika Datta Dhitala and a manuscript available in the manuscript library Allahabad, an organ of the U.P. State Archives.

Although the name of the work suggests that the text deals with the Tantras in general, in fact it deals with the Pāñcarātra System in particular and those who are qualified to study it. Dr. Kalia has done yomen's service in editing one of the important texts on the Pāñcarātra Āgama and writing a critical and scholarly introduction to it. The learned author is planning to translate this important text into Hindi and English. It is hoped that it will be in the hands of the scholars in near future.

Dr. Kalia deserves congratulations for editing this important work on the Vaiṣṇava Āgama in this form.

I shall be failing in my duty if I do not place on record my gratitude to Sri Vishwa Mohan, the Proprietor of the Pnar Mudrak to bring out the book in this form.

Independence Day
1996

**J. P. Sinha**
Secretary

# विषयानुक्रमणिका

## उपोद्घातः

ग्रन्थकर्तृपरिचयः i

भट्टोजिदीक्षितस्य देशादिनिरूपणम् ii

ग्रन्थकर्तुः कालः iii

प्रक्रियापरम्परा भट्टोजिदीक्षितश्च v

१. रूपावतारः vii

२. रूपमाला vii

३. प्रक्रियाकौमुदी viii

४. वैयाकरणसिद्धान्तकौमुदी ix

भट्टोजिदीक्षितस्य गुरवः xii

१. शेषश्रीकृष्णाचार्यः xii

२. अप्पयदीक्षितः xiii

३. नृसिंहाश्रममुनिः xiv

४. रुक्माङ्गदः सुधीः ? xvi

भट्टोजिदीक्षितस्य गुरुद्रोहित्वम् xvii

भट्टोजिदीक्षितस्य कर्तृत्वम् xix

१. शब्दकौस्तुभः xx

२. वैयाकरणभूषणकारिकाः xxi

३. वैयाकरणसिद्धान्तकौमुदी xxii

४. प्रौढमनोरमा xxii

तन्त्राधिकारिनिर्णयः xxiii

तन्त्रशब्दस्यार्थः तन्त्रसाहित्यस्य वैविध्यञ्च xxiii

तन्त्राधिकारिनिर्णयस्य प्रतिपाद्यो विषयः xxiv

पाञ्चरात्रतन्त्राणां प्रामाण्याऽप्रामाण्यविमर्शः xxv

तन्त्राधिकारिनिर्णयस्य वैशिष्ट्यम् xxvi

सम्पादनमधिकृत्य xxxi

सन्दर्भग्रन्थाः xxxiii

तन्त्राधिकारिनिर्णयः [मूलग्रन्थः] १-५२

मङ्गलाचरणम् १

पाञ्चरात्रादिप्रामाण्यदौर्लभ्योक्तिः १

तत्र कौर्मप्रमाणम् १

पाञ्चरात्रादीनां मोहकत्वम् १

तत्र वासिष्ठलैङ्गप्रमाणम् १

हेमाद्रिश्राद्धकाण्डब्रह्मवैवर्तप्रमाणम् २

सूतसंहिताप्रमाणम् ४

पाञ्चरात्रादीनां त्रयीवाह्यत्वे तन्त्रवार्तिकप्रमाणम् ६

पाञ्चरात्रादीनां विद्यास्थानेष्वपरिगणनादप्रामाण्ये तन्त्रवार्तिकप्रमाणम् ६-८

पाञ्चरात्रादीनां पाषण्डत्वम् ८

| | |
|---|---|
| पाञ्चरात्रादीनाम् (अधिकारिविशेषं प्रति) प्रामाण्यम् | १० |
| सूतसंहिताप्रमाणम् | ११ |
| वेदाविरुद्धांशस्योत्तरमीमांसासम्मतप्रामाण्यप्रतिपादनम् | १२ |
| शाङ्करभाष्यप्रमाणम् | १२ |
| वासिष्ठलैङ्गप्रमाणम् | १४ |
| तन्त्रेषु कोऽधिकारी को नेति प्रतिपादनम् | १८ |
| वेदबाह्यानां सङ्कीर्णयोनिजानां स्त्रीशूद्राणां च तन्त्राधिकारित्वप्रतिपादनम् | १८ |
| कौर्मप्रमाणम् | १८ |
| तन्त्राणां भ्रष्टाधिकारित्वम्, भ्रष्टान् प्रति प्रामाण्यञ्च | २१ |
| सूतसंहिताप्रमाणम् | २१ |
| पराशरोपपुराणप्रमाणम् | २६ |
| सौरपुराणप्रमाणम् | २७ |
| कौर्मप्रमाणम् | २७ |
| पराशरोपपुराणसाम्बपुराणप्रमाणम् | २८ |
| सूतसंहिताप्रमाणम् | २९ |
| सङ्करजानामप्यधिकारे कौर्मप्रमाणम् | ३३ |
| स्त्रीशूद्राधिकारे भागवतप्रमाणम् | ३४ |
| कुण्डगोलकयोरधिकारोक्तिः | ३४ |
| ब्रह्मपुराणाऽऽश्वलायनस्मृतिप्रमाणम् | ३४ |
| तप्तमुद्रादिधारणनिषेधे बृहन्नारदीयप्रमाणम् | ३५ |
| विविधपुराणादिप्रमाणम् | ३६ |
| तप्तचक्रादिधारणे प्रमाणानि | ३९ |
| उदाहृतवचनानां याथार्थ्यम् | ४२ |
| विष्णुभक्तिचन्द्रोदये ब्रह्मपुराणवचनोदाहरणम् | ४७ |

तप्तमुद्रानिन्दावचनानि ४८

पतितब्राह्मणानां भिश्रपूजायामधिकारित्वम् ५०

पतितब्राह्मणानामागमेष्वधिकारनिरूपणम ५०

## अनुबन्धाः

उदाहृतश्लोकानामनुक्रमणिका ५३

उदाहृतवेदवचनानामनुक्रमणिका ७५

उदाहृतसूत्रवार्तिकादीनामनुक्रमणिका ७७



# उपोद्घातः

तन्त्राधिकारिनिर्णयस्याऽस्य रचयिता श्रीमद्भट्टोजिदीक्षितो मुख्यतया व्याकरणाचार्य-रूपेण नव्यव्याकरणाचार्यरूपेण वा जगति प्रसिद्धः। एतद्विरचिता वैयाकरणसिद्धान्तकौमुदी प्रक्रियापरम्परायाः प्रतिनिधिग्रन्थतया समग्रेऽपि भारते प्रथिता विराजते। श्रीमद्भट्टोजि-दीक्षितविरचितानाम् उपलब्धाऽनुपलब्धानाम्, प्रकाशिताऽप्रकाशितानां सर्वेषामपि ग्रन्थानां विवरणेन स्फुटतरमवभासते यदयं विद्वद्वरेण्यो न केवलं व्याकरणशास्त्रस्य मूर्द्धन्यो विद्वाना-सीत्, धर्मशास्त्रदर्शनादिविषयाणामपि विशिष्टो बहुश्रुतश्चाऽऽसीद् विद्वानयम्। तथ्यमिदं तन्त्राधिकारिनिर्णयाभिधानस्य ग्रन्थस्याऽस्य सम्यगनुशीलनेन सुविशदं प्रमाणीभवति। ग्रन्थो-ऽयमेतावता कालेनाऽनुपलब्धप्राय एवाऽऽसीत्। प्रायः शतवर्षेभ्यः प्राक् मुद्रितोऽपि ग्रन्थोऽय-मशुद्ध्यादिदृष्टया कस्माच्चिद् हस्तलिखितग्रन्थादविशिष्ट एवाऽऽसीत्। अतएव ग्रन्थस्याऽस्य सुसम्पादितं संस्करणं नितान्तमपेक्षितमासीत्। तामेव प्राक्तनीमपेक्षामेतत्सुसम्पादितं संस्करणं समीचीनतया निरवकाशां विधास्यति।

## ग्रन्थकर्तृ-परिचयः

तन्त्राधिकारिनिर्णयाख्यस्याऽस्य ग्रन्थस्य रचयिता वैयाकरणसिद्धान्तकौमुदीरचनया लब्धकीर्तिः श्रीमद्भट्टोजिदीक्षितो वर्तत इत्यस्मिन् विषये कोऽपि संशयो नाऽस्ति। ग्रन्थस्याऽस्य पुष्पिकायामेवमुल्लिखितमुपलभ्यते—

'इति श्रीमदद्वैतसिद्धान्तप्रतिष्ठापक-श्रौतस्मार्तसत्सम्प्रदाय-
प्रवर्तक–**श्रीमद्भट्टोजिभट्ट**विरचितस्
तन्त्राधिकारिनिर्णयस्समाप्तः।"

अत्र ग्रन्थकर्तृरूपेणोल्लिखितः श्रीमद्भट्टोजिभट्टो वस्तुतः प्रसिद्धवैयाकरणः श्रीमद्-भट्टोजिदीक्षित एव, तेषु तेषु ग्रन्थेषु भट्ट-दीक्षितशब्दयोरव्यतिरेकेणोपलभ्यमानत्वात्। यथोक्तं सिद्धान्तकौमुद्यन्ते—

---

१. तन्त्राधिकारिनिर्णयः, समाप्तौ

'भट्टोजिदीक्षितकृतिः सैषा सिद्धान्तकौमुदी ।
प्रीत्यै भूयाद् भगवतोर्भवानीविश्वनाथयोः ॥

इति **भट्टोजिदीक्षित**विरचितायां सिद्धान्तकौमुद्याम् उत्तरार्द्धं समाप्तम् ।'[१] यथा चोक्तं भूषणसारे—

'वाग्देवी यस्य जिह्वाग्रे नरीनर्ति सदा मुदा ।
**भट्टोजिदीक्षित**महं पितृव्यं नौमि सिद्धये ॥'[२]

एवं दीक्षितेति कुलनाम्नाऽनेकेषु स्थलेषु विद्वद्वर्योऽसौ समुल्लिखित उपलभ्यते । भट्टेत्यप्यस्ति कुलनामैतस्य । प्रसिद्धमेवाऽस्त्येतद् यदेतत्कुले जाता 'भट्ट'—इति कुलनाम्ना सम्बोधिता भवन्ति, यथा—रङ्गोजिभट्टः, कौण्डभट्टः इत्यादि । अनेनैवोपनाम्नाऽऽत्मानमपि निर्दिशति ग्रन्थकारः—

'समर्प्य लक्ष्मीरमणे भक्त्या श्रीशब्दकौस्तुभम् ।
**भट्टोजिभट्टो** जनुषः साफल्यं लब्धुमीहते ॥'[३]

भट्टोजिदीक्षितस्याऽनुजः सहोदरः श्रीरङ्गोजिभट्टोऽप्येवमेव 'भट्ट' इति कुलसञ्ज्ञया तं विनिर्दिशति—

'वाग्देवी यस्य जिह्वाग्रे नरीनर्ति सदा मुदा ।
**भट्टोजीभट्टसञ्ज्ञं** तं गुरुं नौमि निरन्तरम् ॥'[४]

श्लोकोऽयं शब्दसाम्येन भावसाम्येन च पूर्वोदाहृतं भूषणसारगतं श्लोकं स्मारयति ।

## भट्टोजिदीक्षितस्य देशादिनिरूपणम्—

श्रीमद्भट्टोजिदीक्षितोऽयं महाराष्ट्रियः सारस्वतब्राह्मण आसीदिति केचिदभिप्रयन्ति ।[५] पण्डितबलदेवोपाध्यायस्तु मतमिदं न स्वीकरोति । तन्मतानुसारेण विद्वद्वर्योऽयम् आन्ध्रप्रदेश-

---

१. वैयाकरणसिद्धान्तकौमुदी, चतुर्थो भागः, पृ० ३७९
२. वैयाकरणभूषणसारः, ३
३. शब्दकौस्तुभम्ः, मङ्गलश्लोकः
४. अद्वैतचिन्तामणिः, पृ० ७६
५. 'Born in Mahārāṣṭra, Bhaṭṭoji belonged to a Brāhmaṇa family of the Sāraswatas'.
Bhaṭṭoji Dikṣita : His Contribution to Sanskrit Grammar, p. 2

वास्तव्यः तैलङ्गब्राह्मणश्चाऽऽसीत् ।[1] एवं परस्परविरुद्धं मतद्वयमुपलभ्यते । किन्तु तैस्तैर् मतावलम्बिभिः स्वस्वपक्षपातिनी काचिद् विशिष्टा पुष्टा च युक्तिर्नैव प्रादर्शि । एतस्मात् कारणान् मतद्वयेऽस्मिन् किं वा मतं निर्दुष्टं स्वीकरणीयञ्चेत्येतन्निश्चित्य वक्तुं न शक्यते । एतत्परं निश्चित्य वक्तुं शक्यते यदयं विद्वद्वर्यो मूलरूपेण दक्षिणदेशवास्तव्य आसीत् । तत्र कारणमस्ति विद्वद्वर्यस्यास्य 'जी'–इत्यन्तनाम । प्रायो दक्षिणदेश एव 'जी'–इत्यन्तनाम्नः प्रथा प्रचलितोपलभ्यते ।

## ग्रन्थकर्तुः कालः

ग्रन्थकर्तुः श्रीमद्भट्टोजिदीक्षितस्य काल इदानीं विवेचनविषयतामाप्नोति । को वा संस्कृतज्ञो न जानाति यत् पण्डितराजजगन्नाथः श्रीमद्भट्टोजिदीक्षितस्य न केवलं विद्याक्षेत्र आसीत् प्रतिस्पर्धी तं प्रति सामर्षोऽप्यासीत् । उभावपि विद्वांसौ समकालिकावेवाऽऽस्तामित्य-स्मिन् विषये न कोऽपि सन्देग्धि । एतयोः पण्डितराजस्य समयो निश्चित एवाऽस्ति । अयं खल्वितिहासप्रसिद्धान् कांश्चित् पुरुषान् स्वरचनासु यत्र तत्र समुल्लिखति । यथा अकबर-नृपतितनूजं मुगलराजानं जहाँगीरम् एवं स्मरति पण्डितवर्योऽयम्—

'व्याकुप्यन्नूरदीनक्षितिरमणरिपुक्षोणिभृत्पक्ष्मलाक्षी-
लक्षाक्षीणाश्रुधारासमुदितसरितां सर्वतः सङ्गमेन ।।'[2]

अत्रोल्लिखितो नूरदीनो जहाँगीर एव यस्य सर्वमान्यः शासनसमयः १६०५ खिष्टाब्दतः १६२५ खिष्टाब्दपर्यन्तमासीत् । शाहजहाँनृपतेर् मातुलो नूरजहाँ-नाम्न्या महिष्या भ्राता 'आसफखाँ' विशेषतया वर्णितोऽस्ति पण्डितराजेन । यथा—

**'सार्वभौमसम्बन्धिषु सकलेषु सामन्तेषु वाङ्मयेष्विव काव्यकलापः, काव्य-कलापेष्विव ध्वनिः, ध्वनिष्विव रसो, रसेष्विव शृङ्गारः सकलसहृदयहृदयङ्गमेन महिम्ना मधुरिम्णा च सम्भावितः सकलशास्त्रसारावगाही नवाबासफजाही ।'**[3]

एवमेव रसगङ्गाधरेऽपि नवाबासफखानस्याऽसकृदुल्लेखोऽकारि—

---

१. 'भट्टोजिदीक्षित आन्ध्रदेश के निवासी थे । ये तैलङ्ग ब्राह्मण थे । ये महाराष्ट्रीय नहीं थे जैसा कि सामान्य लोगों में असामान्य विश्वास है ।'

काशी की पाण्डित्य-परम्परा, पृ० ५८

२. पण्डितराजकाव्यसंग्रहः, पृ० २००

३. आसफविलासः, (पण्डितराजकाव्यसंग्रहे); पृ० ८४

'सुधेव वाणी वसुधेव मूर्तिः सुधाकरश्रीसदृशी च कीर्तिः ।
पयोधिकल्पा मतिरासफेन्दोर्महीतलेऽन्यस्य न हीति मन्ये ।।'[1]

नवावासफखानस्य मृत्युः १६४१ खिष्टाब्देऽभूत् । एवं पण्डितराजः कञ्चित्कालं जहाँगीरस्याऽऽश्रयं स्वीकृत्य तस्य मृत्योरनन्तरं १६२८ खिष्टाब्दे उदयपुरनृपतेर् जगतसिंहस्याश्रयं स्वीकृतवान् । तत्रैवाऽनेन तत्प्रशस्तिमुद्दिश्य जगदाभरणस्य रचना कृता । जगतसिंहस्य शासनकालः १६२८ खिष्टाब्दतः १६५९ खिष्टाब्दपर्यन्तमासीत् । तदनन्तरं कदाचिदयं शाहजहाँनृपतेर् आमन्त्रणं स्वीकृत्य तस्याश्रयमङ्गीकृतवान्, राज्ञा 'पण्डितराज' इत्युपाधिना सम्मानितश्च । शाहजहाँनृपतेः शासनकालः १६२८ खिष्टाब्दतः १६५८ खिष्टाब्दपर्यन्तमासीत् । पण्डितराजेन 'प्राणाभरणे' कामरूपनृपतेर् प्राणनारायणस्याऽपि वर्णनमकारि । प्राणनारायणस्याऽस्य शासनकालः १६३३ खिष्टाब्दतः १६६६ खिष्टाब्दपर्यन्तमासीत् । एतानैतिहासिकान् सन्दर्भानाधृत्य काणेमहोदयेन पण्डितराजस्य साहित्यिकगतिविधीनां कालः १६२० खिष्टाब्दतः १६६५ खिष्टाब्दपर्यन्तं स्वीकृतः ।[2]

मनोरमाकुचमर्दिन्यां पण्डितराजो जगन्नाथः शेषकृष्णात्मजं शेषवीरेश्वरं स्वगुरुत्वेन समुल्लिखति—

'सा च प्रक्रियाप्रकाशकृतां पौत्रैः······अस्मद्गुरुवीरेश्वरपण्डितानां तनयैर्दूषिताऽपि स्वमतिपरीक्षार्थं पुनरस्माभिर्निरीक्ष्यते ।'[3]

पण्डितराजस्य गुरोः शेषवीरेश्वरस्य पिता शेषश्रीकृष्णो भट्टोजिदीक्षितस्य गुरुरासीदिति स्वयमेव भट्टोजिदीक्षितेन विशदतरमुदघोषि, यथा—

'निर्विशेषमहं शेषाच्छेषकृष्णं गुरुं भजे ।
यो मामशेषाः शेषोक्तीर्विशिष्याध्यजीगपत् ।।'[4]

---

१. रसगङ्गाधरः पृ० २२९
तथा च 'युक्तं तु याते दिवमासफेन्दौ तदाश्रितानां यदभूद् विनाशः ।
इदन्तु चित्रं भुवनावकाशे निराश्रया खेलति तस्य कीर्तिः ।।'
तत्रैव

२. 'Therefore, the literary activity of जगन्नाथ lies between 1620 and 1665 A.D.
History of Sanskrit Poetics, p. 324

३. मनोरमाकुचमर्दिनी, उपोद्घाते

४. शब्दकौस्तुभम्, १

एवं पण्डितराजस्य गुरुः शेषवीरेश्वरः भट्टोजिदीक्षितश्चोभावपि समकालिकावेवाऽऽस्ताम् । तथ्यमिदमधोलिखितेन चित्रेण विशदतया निरूपितं भवति—




पण्डितराजजगन्नाथस्य कालविषये नाऽस्त्यद्यत्वे कोऽपि सन्देहः । एतेन तद्गुरोः शेषवीरेश्वरस्य कालः किञ्चित्पूर्वमेव भवितुमर्हति । पी० वी० काणे-महोदयेन विचार्यैव भट्टोजिदीक्षितस्य साहित्यिकगतिविधीनां कालः १५८० खिृष्टाब्दादारभ्य १६३० खिृष्टाब्दपर्यन्तं निर्धारितोऽस्ति ।[1]

## प्रक्रियापरम्परा भट्टोजिदीक्षितश्च

दशमखिृष्टात्पूर्वं संस्कृतभाषायाः सर्वमप्यध्ययनम् अष्टाध्यायीक्रमेणैव भवति स्म । एवं प्रतीयते यदेतस्मादेव कालादारभ्यैतेन क्रमेणाऽध्ययनेऽध्यापने च जनैः किञ्चित्काठिन्यमनुभूतम् । अष्टाध्यायीक्रमस्य वैशिष्ट्यमिदमस्ति यदेतेन क्रमेणाऽध्ययने कृते संस्कृतव्याकरणस्य सर्वाङ्गीणं ज्ञानं भवति । किन्तु यदि कस्यचिदांशिकज्ञानमेवाऽपेक्षितमस्ति तर्हि तदर्थं कोऽपि सुकर उपाय एतस्मिन् क्रमे नाऽस्ति । समग्राया अष्टाध्याय्या अध्ययनमावश्यकमस्ति, व्याकरणस्य पूर्णं ज्ञानमपेक्षितमस्त्वांशिकं वा । एतस्याऽनुभूयमानस्य काठिन्यस्य निराकरणार्थमेव प्रक्रियापरम्पराया आविर्भावो बभूव । प्रक्रियापरम्परायाम् अष्टाध्यायीसूत्राणां विषयक्रमेण पुनर्व्यवस्थापनं तैस्तैराचार्यैः प्रयतितम् । एवमष्टाध्यायीक्रमेणाऽध्ययनेऽनुभूयमानस्य काठिन्यस्य निराकरणं सञ्जातम्, किन्त्वन्ये दोषाः समापतिताः । अष्टाध्यायीसूत्राणां पुनर्व्यवस्थापने कृते तेषां मौलिकः सहजश्च क्रमो विनष्टो जातः । नष्टे च क्रमे पौर्वापर्ये च विपर्यस्ते क्रमजन्यं पौर्वापर्यजन्यं वा सामरस्यं सुखावबोधित्वं च प्रणष्टम् । एतस्य दोषस्य निराकरणार्थं प्रक्रियापरम्परावलम्बिभिर् अर्थावबोधायापेक्षिता वृत्तिर् विरचिता । एवमस्वाभाविकोऽर्थावबोधस्तु सुलभः सञ्जातः, किन्तु वृत्त्यध्ययनरूपाऽधिकायासात्मकः

---

१. 'Therefore, भट्टोजिऽ literary activity may be placed somewhere between 1580 and 1630 A.D.'

History of Sanskrit Poetics, p. 324

कश्चनान्यो दोषः पुनरायातः। प्रक्रियाक्रमेणाध्ययनेऽनुभूयमानान् दोषान् वर्णयन् श्रीगोपालशास्त्री दर्शनकेसरी एवं प्रतिपादयति—

'काठिन्यबुद्धिः क्रमसूत्रलोपाद् मेधाविलोपोऽपि च वृत्तिघोषात्।
हा कौमुदीरीतिरभूतपूर्वा महर्षिशिक्षोत्तमशस्यदूर्वा ॥
सदाऽध्येया सर्वैर्निगमसदृशी पाणिनिमुनेर्
अहो अष्टाध्यायी झटिति पदबोधप्रणयिनी।
सुपूर्णा वैज्ञानी ध्रुवमतिशयाह्लादजननी
स्वयं स्वार्थं ब्रूते क्रमनियमपाठेन सुगमा ॥'[1]

भवतु, सर्वेषां सूत्राणां तेनैव क्रमेण कण्ठस्थीकरणम्—इदमेकमेव अष्टाध्याय्याः सर्वजनग्राह्यतायां प्रथमं प्रकृष्टञ्च बाधकमस्ति। एवमस्माभिर्दृश्यते यदुभयविधाऽध्ययनपरम्परासु दोषा अपि सन्ति, गुणा अपि सन्ति। अतएव संस्कृतव्याकरणस्य सहजगम्भीरज्ञानायोभयविधपरम्परयोः किमपि विशिष्टं सामञ्जस्यमवश्याऽपेक्षितमिव प्रतिभाति। नाऽन्यः पन्था विद्यतेऽयनाय। इदानीं प्रक्रियापरम्परायाः संक्षिप्तपरिचयोऽप्युपस्थाप्यते क्रमप्राप्तत्वादपेक्षितत्वाच्च।

विषयानुसारमष्टाध्यायीसूत्राणामुपस्थापनं प्रक्रियाक्रमस्याऽस्ति किमपि विशिष्टं स्वरूपमित्यवोचाम। प्रक्रियाक्रमस्याऽऽविर्भावात्पूर्वमेव विषयानुसारि व्याकरणं तैस्तैराचार्यैर् विरचितम्, तत्सर्वमपाणिनीयकोटौ समाविशति। अत्र यानि व्याकरणान्युल्लेखमर्हन्ति, तानीमानि सन्ति—

१. कातन्त्रव्याकरणम्; रचयिता—शर्ववर्मा, रचनाकालः–प्रथमशताब्दी खिृष्टीया।[2]

२. हैमव्याकरणम्; रचयिता—हेमचन्द्रः, रचनाकालः–एकादशद्वादशशताब्द्यौ।[3]

---

१. संस्कृत पठन पाठन की अनुभूत सरलतम विधि, पृ० १८

२. 'शर्ववर्मणा प्रथमशताब्द्यामस्य ग्रन्थस्य रचना कृता।'
—प्रक्रियाकौमुदीविमर्शः पृ० ८

३. 'एकादशशताब्द्यां हेमचन्द्रेण संस्कृतप्राकृतेत्युभयविधानां शब्दानां ज्ञानाय सिद्धहेमचन्द्रशब्दानुशासननामकस्याऽपाणिनीयप्रक्रियाग्रन्थस्य रचना कृता।'
—तत्रैव, पृ० १३

द्रष्टव्यम्—'Hemachandra was born on the full-moon night of the month of Kārtika in the year of Vikrama 1145 (Corresponding to A.D. 1088, November, December) at a place called Dhunduka, now in the British collectorate of Ahmedabad'.
—Systems of Sanskrit Grammar, p. 61

३. मुग्धबोधव्याकरणम्; रचयिता—वोपदेवः, रचनाकालः—त्रयोदशशताब्दी ।[1]

पाणिनीयव्याकरणमाश्रित्य यः प्रक्रियासम्प्रदायः प्राचलत् तस्य सम्प्रदायस्य भट्टोजिदीक्षित एवाऽऽसीत् प्रधानो मूर्धन्यश्च विद्वान्, किन्तु नायमासीदस्य सम्प्रदायस्य प्रथमाचार्य आविर्भावकाचार्यो वा । इयं परम्परा पाणिनीयाऽपाणिनीयैर् व्याकरणाचार्यैर् भट्टोजिदीक्षितात् पञ्चशताब्दात् प्रागेव समारब्धा । भट्टोजिदीक्षितात् पूर्वं पाणिनीयप्रक्रियापरम्परायां ये प्रमुखा ग्रन्था विरचिता अभूवन् तेषां संक्षिप्तोल्लेखोऽत्र वाञ्छितत्वात् प्रस्तूयते—

## १. रूपावतारः

पाणिनीयाष्टाध्यायीमाश्रित्य समारब्धस्य प्रक्रियासम्प्रदायस्य रूपावतारोऽयमस्ति प्रथमो ग्रन्थः । अस्य ग्रन्थस्य रचयिताऽस्ति सिंहलदेशीयो बौद्धधर्मावलम्बी 'धर्मकीर्ति'—नामधेयः कोऽप्याचार्यः ।[2] खिष्टीयदशमशताब्द्यामस्य ग्रन्थस्य रचनाऽभूदिति विद्वद्भिः सुविचार्य निर्णीतमस्ति ।[3] अवतारेषु विभक्तत्वाद् ग्रन्थोऽयं **'रूपावतार'** इति नाम्ना व्यपदिष्टः । विषयानुरोधेनाऽवताराणां नामानि कल्पतानि सन्ति । पूर्वार्द्धोत्तरार्द्धयोः पूर्वार्द्धे प्रकरणानां नामान्येवमुपलभ्यन्ते, यथा—सञ्ज्ञावतारः, सन्ध्यवतारः, विभक्त्यवतारः, अव्ययावतारः, स्त्रीप्रत्ययावतारः, कारकावतारः, समासावतारः, तद्धितावतारश्च । 'धातुप्रत्ययपञ्चिका' इत्यस्ति उत्तरार्द्धस्य सञ्ज्ञा ।

## २. रूपमाला

'विमलसरस्वती' इत्यस्ति नामैतस्य 'रूपमाला'—नामधेयस्य प्रक्रियाग्रन्थस्य रचयितुः । डॉ० बेल्वल्कर-महाभागेन १३५० खिष्टीयाब्दोऽस्य ग्रन्थस्य रचनाकालत्वेन स्वीकृतः ।[4] मालासञ्ज्ञकप्रकरणेषु विभक्तत्वादस्य ग्रन्थस्य नाम **रूपमाला** इति कल्पितम् । केषाञ्चित् प्रकरणानां नामानि द्रष्टव्यानि—सञ्ज्ञामाला, स्वरसन्धिः, प्रकृतिभावः, व्यञ्जनसन्धिः, विसर्गसन्धिः, अजन्तमाला, हलन्तमाला, सर्वनाममाला इत्यादीनि ।

---

१. '१३५० ईशवीयतमे वर्षे बोपदेवपण्डितेनाऽयं ग्रन्थो व्यरचि ।'

—प्रक्रियाकौमुदीविमर्शः, पृ० १३

२. Pāṇini, p. 285

३. 'On the basis of this evidence, the Rūpāvatāra could be placed in the tenth century.'

—तत्रैव

अथ च—'अस्मिन् क्रमे रूपावतारस्य निर्माणं दशमशताब्द्यामभूदिति रूपावतारसम्पादकैः श्रीरङ्गाचार्यैः संसाधितम् ।' —प्रक्रियाकौमुदीविमर्शः, पृ० १२

४. 'The earliest and on that ground the Simplest of these recasts of the Aṣṭādhyāyī that has come down to us is the Rūpamālā of Vimala Sarasvatī, a writer who, if the date given in a Ms. of the work be true, must be placed not later than A.D. 1350.'

—Systems of Sanskrit Grammar, p. 36

## ३. प्रक्रियाकौमुदी

भट्टोजिदीक्षितात् पूर्वं विरचितेषु प्रक्रियाग्रन्थेषु प्रधानतमोऽतिमहत्त्वपूर्णश्च ग्रन्थोऽयमस्ति 'प्रक्रियाकौमुदी' इति । वैयाकरणसिद्धान्तकौमुदीरचनायाः पूर्वमयमेव ग्रन्थः संस्कृतभाषाया अध्ययनायाऽध्यापनाय च प्रचलित आसीत् । श्रीकृष्णाचार्यपुत्रः श्रीरामचन्द्राचार्योऽस्ति 'प्रक्रियाकौमुदी'-नामधेयस्याऽस्य ग्रन्थस्य रचयिता । एतस्याः प्रक्रियाकौमुद्या रचनाकालः सम्पादकेन के० पी० त्रिवेदिना १४५० खिष्टीयाब्दः स्वीकृतः ।[१] पण्डितबलदेवोपाध्यायः चतुर्दशशताब्द्या उत्तरार्द्धं (१३५०-१४००) श्रीरामचन्द्राचार्यस्य कालत्वेन स्वीकरोति ।[२] विद्वद्वर्येणाऽनेन ग्रन्थत्रयस्य रचनाऽकारि । यथा—

१. प्रक्रियाकौमुदी,

२. कालनिर्णयदीपिका,

३. वैष्णवसिद्धान्तदीपिका च ।

विट्ठलाचार्यः प्रक्रियाकौमुदीकारस्य रामचन्द्राचार्यस्य पौत्र आसीत् । अनेन विट्ठलाचार्येण प्रक्रियाकौमुद्याः 'प्रसाद'—नामधेया काचित् टीका विरचिता । अस्यां टीकायामनेन विट्ठलाचार्येण रामचन्द्राचार्यस्य वंशवृक्षः प्रदत्तः । तदनुसारेण श्रीरामचन्द्राचार्य आन्ध्रदेशवास्तव्यः, ऋग्वेदी, शेषवंशीयो ब्राह्मणश्चाऽऽसीत् । 'कौण्डिन्यम्' इत्यस्त्यस्य गोत्रनाम । अस्य वंशो व्याकरणशास्त्रीयज्ञानवैभवेन जगति विश्रुत आसीत् । एतत्सर्वं विट्ठलस्याऽनयोक्त्या प्रमाणितं भवति—

'किं शेषः पाणिनिर्वा वररुचिरथवा सर्वविद्याप्रणेता
शम्भुर्भूभावभूद् भूसुरकुलतिलको ह्यन्धदेशेऽग्रवंशे ।
ऋग्वेदी सर्वशास्त्रप्रकटनपटुधीः कृष्णजो रामचन्द्रोऽ-
नन्ताचार्यप्रपौत्रो दिशतु कृतिमतिं मे स कौण्डिन्यगोत्रः ॥'[३]

श्रीरामचन्द्राचार्यस्य वंशो वैष्णवमतावलम्बी पाञ्चरात्रागमे बद्धादरश्चाऽऽसीत् । डॉ० आद्याप्रसादमिश्रेण श्रीरामचन्द्राचार्यस्य वंशवृक्ष एवं प्रस्तुतोऽस्ति[४]—

---

१. प्रक्रियाकौमुदीविमर्शः, पृ० १७
२. संस्कृत शास्त्रों का इतिहास, पृ० ४९५
३. प्रक्रियाकौमुदीविमर्शः, पृ० १९
४. तत्रैव




प्रक्रियाकौमुदीमुद्दिश्य नैका व्याख्या विरचिता विद्वद्भिः। तासु द्वे व्याख्ये विशिष्योल्लेखमर्हन्ति। प्रथमा व्याख्या प्रक्रियाकौमुदीकारस्य रामचन्द्राचार्यस्य पौत्रेण विट्ठलाचार्येण विरचिताऽस्ति 'प्रसाद' इति नामधेया, यस्याश्चर्चाऽस्माभिः पूर्वमेवाऽकारि। द्वितीयाया व्याख्यायाः 'प्रकाश' इति नामधेयाया रचयिताऽस्ति शेषश्रीकृष्णाचार्यः। एतस्यामेव व्याख्यायां प्रतिपादितानि मतानि व्याख्याकृच्छेषश्रीकृष्णशिष्येण भट्टोजिदीक्षितेनाऽसकृद्दूषितानि प्रौढमनोरमायाम्। इदमप्येकं कारणमस्त्येतस्या व्याख्याया अतिशयप्रसिद्धेः।

## ४. वैयाकरणसिद्धान्तकौमुदी

प्रक्रियापरम्परास्रोतस्विनीयमष्टाध्यायीमाश्रित्य रूपावताररूपमालादिभ्यः तीर्थेभ्यः प्रवहन्ती प्रक्रियाकौमुदीं प्राप्य स्वरूपवैशद्यं प्रकटयन्ती श्रीमद्भट्टोजिदीक्षितविरचितां वैयाकरणसिद्धान्तकौमुदीमिमामधिगम्य स्वरूपस्य विशदतरतां वैभवस्य चरमोत्कर्षञ्च प्राप्तवती। एतस्या आविर्भावानन्तरमियमेव समग्रेऽपि भारते संस्कृताऽध्ययनाऽध्यापनयोर् आधारभूतो ग्रन्थः सञ्जातः। तथ्यमिदं ग्रन्थस्याऽस्य किमप्यनितरसाधारणं वैभवं वैशिष्ट्यञ्च प्रकटयति। अध्ययनाऽध्यापनमाध्यमरूपेणैतस्याः सिद्धान्तकौमुद्याः प्रसिद्धेः कारणात् सर्वाण्यप्यन्यानि व्याकरणान्यप्रासङ्गिकानि विहितानि पाणिनिश्च।[1]

---

१. द्रष्टव्यम्—'.. a work which is remarkable not only by reason of the host of commentaries and Sub-commentaries that it called into being, nor again because it is at present practically the only popular introduction to Pāṇinis grammar, but also owing to the fact—strange as, it may appear—that it has eventually ousted Pāṇini himself and most of the other ancient authors of grammar, and also the numerous new Schools that had lately sprung into existence.'

—Systems of Sanskrit Grammar, p. 38

प्रक्रियाकौमुद्यां केवलं कानिचिदेव सूत्राणि सङ्कलितानि सन्ति, किन्तु सिद्धान्तकौमुद्या वैशिष्ट्यमिदमस्ति यदेतस्याम् अष्टाध्याय्याः प्रायः सर्वाण्यपि सूत्राणि विभिन्नेषु प्रकरणेषु संगृह्य व्याख्यातान्युपलभ्यन्ते । भट्टोजिदीक्षितेन सिद्धान्तकौमुद्या प्रौढमनोरमाऽऽख्या प्रसिद्धा स्वोपज्ञव्याख्यापि विरचिता । यथा तेन स्वयं प्रतिज्ञातम्—

'ध्यायं ध्यायं परं ब्रह्म स्मारं स्मारं गुरोर्गिरः ।
सिद्धान्तकौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम् ॥'[1]

'सिद्धान्तकौमुदी' 'प्रौढमनोरमा' चोभावपि ग्रन्थौ कालान्तरेऽनेकैर् विद्वद्भिर् व्याख्यातावनुव्याख्यातौ च ।

एषा सिद्धान्तकौमुदी पूर्वोत्तरभागयोर्विभक्ता प्रायः सर्वानपि व्याकरणसम्बन्धिविषयान् क्रोडीकरोति । सञ्ज्ञा-परिभाषा-सन्धि-सुबन्त-अव्यय-स्त्रीप्रत्यय-कारक-समास-तद्धितात्मका नवव्याकरणविषयाः सिद्धान्तकौमुद्याः पूर्वभागेऽनेकेषु प्रकरणेषु प्रपञ्चिताः सन्ति । उत्तरार्द्धे च तिङन्त-कृदन्तविषयौ विभिन्नेषु प्रकरणेषु व्याख्यातावुपलभ्येते । तदनन्तरं वैदिकी प्रक्रिया, स्वरप्रक्रिया, लिङ्गानुशासनञ्चेति विषयाः तेषु तेषु प्रकरणेषु निरूपिताः सन्ति ।

वर्तमानकाले संस्कृतभाषाज्ञानाय जनाः पाणिनिकृतामष्टाध्यायीं नाऽधियन्ति, कौमुदीमेवाधियन्ति प्रायशः । भट्टोजिदीक्षितविरचितेयं सिद्धान्तकौमुदी विकल्पभूता स्थानापन्ना वा सञ्जाताऽष्टाध्याय्याः, भट्टोजिदीक्षितश्च पाणिनेः । स्थितिमिमां सोढुमक्षमा स्वामिदयानन्दादयः केचन सिद्धान्तकौमुदीं तत्कर्तारं भट्टोजिदीक्षितञ्चाऽधिक्षिपन्ति ।[2] किन्तु यदि व्याकरणाऽध्ययनस्य विकासक्रमः सम्यगनुशील्यते तर्हि निष्कर्षरूपेण तथ्यमिदं सम्मुखमायाति यद् भट्टोजिदीक्षितेन पाणिनेः, सिद्धान्तकौमुद्या चाऽऽष्टाध्याय्या उपकार एव कृतः, नापकारः । कथमिति विचारणीयम्—भट्टोजिदीक्षितात् पूर्वं प्रवर्तमाना विकासोन्मुखा च प्रक्रियापरम्परा

———————

१. प्रौढमनोरमा, माङ्गलिकः श्लोकः

२. द्रष्टव्यम्—'और जितना बोध इनके पढ़ने से तीन वर्षों में होता उतना बोध **कुग्रन्थ** अर्थात् सारस्वत, चन्द्रिका, **कौमुदी**, मनोरमादि के पढने से पचास वर्षों में भी नहीं हो सकता ।'

—सत्यार्थप्रकाश, पठनपाठनविधि, पृ० ४५

तथा,

'अब जो परित्याग के योग्य ग्रन्थ हैं उनका परिगणन संक्षेप में किया जाता है अर्थात् जो जो नीचे ग्रन्थ लिखेंगे वह वह जालग्रन्थ समझना चाहिए । व्याकरण में कातन्त्र, सारस्वत, चन्द्रिका, मुग्धबोध, कौमुदी, शेखर, मनोरमादि ।'

तत्रैव, पृ० ४८

द्विविधाऽऽसीत्–अपाणिनीया पाणिनीया च। याऽपाणिनीया परम्पराऽऽसीत् सा तु नाम्नैवाऽपाणिनीया। एतस्याः परम्परायाः पाणिनिना सह न कोऽपि सम्बन्ध आसीत्। या पाणिनीया परम्पराऽऽसीत्, साऽपि विशुद्धतया पाणिनीया नाऽऽसीत्। इयं परम्पराऽपि येनकेनचित्प्रकारेणाऽपाणिनीयपरम्परया प्रभाविताऽऽसीत्। एतस्यां परम्परायामपाणिनीयपरम्पराया केचनांशा यथावदङ्गीकृताः। रूपावतार-रूपमाला-प्रक्रियाकौमुदीप्रमुखा ग्रन्था विषयेऽस्मिन् प्रमाणतया द्रष्टुं शक्यन्ते।[1]

किन्तु भट्टोजिदीक्षितस्याऽऽविर्भावानन्तरमियमपाणिनीयांशानामादानपरम्परा सर्वथाऽवरुद्धा जाता। भट्टोजिदीक्षितस्य पाणिनिं प्रति पाणिनीयपरम्पराञ्च प्रति महती श्रद्धा महानभिनिवेशश्चाऽऽसीत्। एतस्मिन् सन्दर्भे तद्विरचितशब्दकौस्तुभस्य द्वितीय आरम्भिकः श्लोको द्रष्टव्यः—

'नमस्कुर्वे जगद्वन्द्यं पाणिन्यादिमुनित्रयम्।
श्रीभर्तृहरिमुख्यांश्च सिद्धान्तस्थापकान् बुधान्॥'[2]

एवमेव वैयाकरणसिद्धान्तकौमुद्या एतस्मिन् सन्दर्भे प्रासङ्गिको मङ्गलश्लोकोऽपि द्रष्टव्यः—

'मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च।
वैयाकरणसिद्धान्तकौमुदीयं विरच्यते॥'[3]

---

१. द्रष्टव्यमत्र—'प्रक्रियाकौमुदीकारैः श्रीरामचन्द्राचार्यवर्यैः केषाञ्चिद् वार्तिकानां मध्ये, सूत्राणामर्थे, केषुचिदुदाहरणेषु च यत्र तत्र तदानीं प्रचलितानां कातन्त्रमुग्धबोधाद्यपाणिनीयव्याकरणानामपि मतस्य सन्निवेशः कृतः। अतएव प्रक्रियाकौमुदीविषये प्रसादे विट्ठलेनोक्तम्—'स्वपरमतयुतां प्रक्रियाकौमुदीं ताम्' इति। तत्र स्वपदेन पाणिनीयं परशब्देन चाऽपाणिनीयं मतमित्यवधेयम्।'

—प्रक्रियाकौमुदीविमर्शः, पृ० ११५

अथ च,

'फलतः रामचन्द्राचार्य ने एक सौ से अधिक अपाणिनीय—पाणिनीय सूत्र से अव्याख्यात, किन्तु लोक में व्यवहृत प्रयोगों को सिद्ध करने के लिए सुन्दर व्यवस्था की है। इसीलिए मुनित्रय से अतिरिक्त वैयाकरणों की प्रमाणता उन्हें स्वीकृत है—विशेषतः कातन्त्र व्याकरण का तथा बोपदेव रचित मुग्धबोध व्याकरण का।'

संस्कृत शास्त्रों का इतिहास, पृ० ४९८

२. शब्दकौस्तुभम्, २; द्रष्टव्यञ्च—'फणिभाषितभाष्याब्धेः शब्दकौस्तुभमुद्धरेः।'

तत्रैव, ३

३. सिद्धान्तकौमुदी, १

भट्टोजिदीक्षितस्याऽऽविर्भावात् प्राग् रामचन्द्राचार्यविरचितः प्रक्रियाकौमुदीग्रन्थ एवाऽध्ययनाऽध्यापनमाध्यमतया सर्वत्र प्रचलितः सर्वमान्यश्चाऽऽसीत् । किन्त्वेषाऽबाधगत्या प्रवर्तमाना प्रवर्धमाना चाऽपाणिनीयमतानामादानपरम्परा भट्टोजिदीक्षितेन दृढतया बलपूर्वकञ्चाऽवरुद्धा, अन्यथा प्रवर्तमाने तस्मिन् व्याकरणे कियानंशः पाणिनिसम्मतः कियानंशश्च पाणिन्यसम्मत इत्येतदप्यद्य वर्तमानसमये सूक्ष्मेक्षिकयाऽनुसन्धानस्याऽन्वेषणस्य च विषयोऽभविष्यत् । व्याकरणसाङ्कर्यस्य, व्याकरणक्षेत्रे प्रदूषणस्य वा स्थितिरकल्पनीया चाऽभविष्यत् । सिद्धान्तकौमुद्यामेतस्यां भट्टोजिदीक्षितेन पाणिनिविरचिताऽष्टाध्याय्याः प्रायः सर्वेषां सूत्राणां तेषु तेषु प्रकरणेषु व्याख्याऽकारि । एतस्मिन्नुद्योगेऽपाणिनीयव्याकरणानां संस्पर्शोऽपि तेन वर्जितः । एतस्य सुपरिणामत्वेन पाणिनिरद्य स्वकीये विशुद्धरूपे विराजमानः सुरक्षितश्च तिष्ठति । आनुषङ्गिकः परिणामस्त्वयमभूद् यद् भट्टोजिदीक्षितविरचितसिद्धान्तकौमुदी पाणिनिसिद्धान्तानां ज्ञानायाऽपरिहार्या जाता । पाणिनिपरम्परायाः सर्वथा प्रदूषितावस्थाऽपेक्षया लोपापेक्षया वा स्थितिरियं सर्वेषामपि पाणिनिप्रणयिनामभिलषणीयतामर्हति । समग्राऽपि प्रक्रियापरम्परा सिद्धान्तकौमुद्यास्तत्र स्थितिश्चैवमवलोकनीया—




## भट्टोजिदीक्षितस्य गुरवः

पदवाक्यप्रमाणपारावारपारीणः श्रीमद्भट्टोजिदीक्षितो व्याकरण-धर्मशास्त्र-वेदान्ताद्यनेकविधानां विद्यानामासीत् पारङ्गतो विद्वान् । तथ्यमिदं तद्विरचिता उच्चकोटिका अनेके ग्रन्था विशदतया प्रमाणयन्ति । एतदनेकविषयाणां विशिष्टं ज्ञानमनेनाऽनेकप्रख्याताचार्याणां सान्निध्यमवाप्याऽधिगतम् । अत्राऽस्य विद्वद्वर्यस्य गुरूणां परिचयः संक्षेपेण प्रस्तूयते—

### १. शेषश्रीकृष्णाचार्यः

यद्यपि भट्टोजिदीक्षितस्याऽनेकेषु विषयेष्वाऽऽसीदप्रतिहता गतिस्तथापि व्याकरणशास्त्रस्याऽऽसीदयं दुर्धर्षोऽद्वितीयश्च विद्वान् । कुतः खल्वनेन शास्त्रस्याऽस्यैतादृशं वैदुष्यं

समधिगतमिति भवति सहजा जिज्ञासा विमर्शकानां मनसि । किन्त्वद्यैतस्मिन् विषये कोऽपि विवादो मतभेदो वा विद्वत्सु नाऽस्ति यदस्य भट्टोजिदीक्षितस्य व्याकरणशास्त्रगुरुः श्रीशेष-श्रीकृष्णाचार्य आसीदिति । अनेनाऽऽचार्यवर्येण प्रक्रियाकौमुद्याः 'प्रक्रियाप्रकाश'-नामधेया काचिद् विपुलार्था व्याख्या निरमायि । एतस्यामेव व्याख्यायामुपन्यस्तानि गुरोर्मतानि तच्छिष्यो भट्टोजिदीक्षितो दूषितवान्, गुरुद्रोहीत्युपाधिञ्चाऽधिगतवानिति विषयोऽग्रे 'भट्टोजि-दीक्षितस्य गुरुद्रोहित्वम्' इत्यत्राऽस्माभिः प्रपञ्चयिष्यते । श्रीशेषश्रीकृष्णस्यैता अन्या रचनाः प्रसिद्धाः सन्ति—(१) कंसवधनाटकम्, (२) पारिजातहरणचम्पूः, (३) शब्दालङ्कारः, (४) पदचन्द्रिका, (५) कृष्णकौतूहलञ्च । भट्टोजिदीक्षितेन स्वयमेव श्रीशेषश्रीकृष्णाचार्यस्य नाम स्वव्याकरणशास्त्रगुरुत्वेनोदलेखि ।[१] किन्त्वेतस्मिन् गुरावेतस्याऽऽत्यन्तिकी श्रद्धा नाऽऽसीदिति गुरुमतखण्डनादिकर्मणा प्रमाणीभवति ।

## अप्पयदीक्षितः

श्रीमदप्पयदीक्षितोऽयं तमिलनाडुप्रदेशे काञ्चीनगरान्नातिदूरवर्तिनि 'अडयप्पल'-नाम्नि भूसुराग्रहारे १५५३ खिष्टाब्दस्य सितम्बरमासस्य द्वाविंशे दिने जन्म लेभे ।[२] वक्षस्स्थलाचार्य इति नाम्ना प्रसिद्धः श्रीमद्-आच्चानदीक्षितः (आचार्यदीक्षित इति संस्कृतनाम) एतस्य पितामह आसीत् ।[३] प्रसिद्धोऽद्वैतवेदान्ताचार्यः श्रीरङ्गराजाध्वरीन्द्र एवाऽस्य गुरुरप्यासीदिति स्वयमेव निर्दिष्टं श्रीमदप्पयदीक्षितेन—

यं ब्रह्म निश्चितधियः प्रवदन्ति साक्षात्तद्दर्शनादखिलदर्शनपारभाजम् ।
तं सर्ववेदसमशेषबुधाधिराजं **श्रीरङ्गराजमखिनं गुरुमानतोऽस्मि** ।'[४]

अनेन विद्वद्वर्येण चतुरधिकशतप्रबन्धा विनिर्मिता इत्येतद्भ्रातृपौत्रेण श्रीनीलकण्ठदीक्षितेन स्वकीये शिवलीलार्णवे समसूचि, यथा—

---

१. द्रष्टव्यम्—

निर्विशेषमहं शेषाच्छेषकृष्णं गुरुं भजे ।
यो मामशेषाः शेषोक्तीर्विशिष्यैवाध्यजीगपत् ॥
(शब्दकौस्तुभभूमिकायामुदाहृतम्)

तथा च

'तदेतत्सकलमभिधाय प्रक्रियाप्रकाशे गुरुचरणैरुक्तम्' (शब्दकौस्तुभे)

—Bhaṭṭoji Dīkṣita : His Contribution to Sanskrit Grammar, p. 4, पाददिप्पण्यौ, 7, 8.

२. यादवाभ्युदयः (सर्गाः १३-१८), प्रस्तावना, xix

३. तत्रैव, xv

४. न्यायरक्षामणिः, मध्वतन्त्रमुखमर्दन—सम्पादकीय उदाहृतम् ।

'कालेन शम्भुः किल तावताऽपि कलाश्चतुष्षष्टिमिताः प्रणिन्ये ।
द्वासप्ततिं प्राप्य समाः प्रबन्धान् शतं व्यधादप्पयदीक्षितेन्द्रः ॥'[1]

एतस्यैव विद्वद्वर्यस्य अप्पयदीक्षितस्य सकाशाद् भट्टोजिदीक्षितोऽद्वैतादिविद्यामधीतवान् । तथ्यमिदं नीलकण्ठदीक्षितविरचितशिवलीलार्णवस्य 'श्रीनीलकण्ठदीक्षितः, तत्समकालिका द्रविडदेशीया अन्ये कवयः' इति शीर्षके श्री टी० एस० कुप्पूस्वामिशास्त्रिविरचित उपोद्घाते सम्यग् उपपादितम्; तद्यथा—

"शाब्दिकसार्वभौमः श्रीमद्भट्टोजिदीक्षितोऽपि तानेव गुरून् प्रार्थयमानस्तेभ्य एवाध्यैष्ट श्रीमद्भाष्यं ब्रह्मसूत्राणां श्रीमच्छङ्करभगवत्पादप्रणीतम् ।. एवं व्याहरन्ति दाक्षिणात्या ऐतिहासिकाः—'श्रीमान् भट्टोजिदीक्षितः स्वयं विरचितान् ग्रन्थान् बहून् लेखकैर्लेखयित्वा प्राहिणोद् बहुभ्यः पण्डितेभ्यः । ते च दृष्ट्वा तां सरणिमतिमञ्जुलां नूत्नां चापाठयंस्तामेव शिष्यान् । अथ बहुना कालेन स एव दक्षिणां दिशं प्रपेदे सह शिष्यैः । तदा किल ददर्श क्वचिन्निकटे चिदम्बरस्य वसतः श्रीमदप्पय्यदीक्षितेन्द्रान् । तत्र च सति प्रसङ्गे तानसौ अधिजग्मिवान् अखिलशास्त्रवेदनचणानधिगतवेदान्तरहस्यान् । तेषामेव मुखात् प्रयतः शुश्राव कौमारिलं तन्त्रम्, श्रीमच्छङ्करभगवत्पादविरचितं ब्रह्मसूत्रभाष्यं च । ततः कुर्वन् गुरवे दक्षिणां ग्रन्थान्ते चोदितः स्वयं गुरुणा पूर्वोत्तरमीमांसयोः कर्तुमेकैकं ग्रन्थम् । प्राणैषीदसौ तन्त्रसिद्धान्तदीपिकां श्रीमत्तत्त्वकौस्तुभं च । तन्त्रसिद्धान्तदीपिकायां श्रीमदप्पय्यदीक्षितेन्द्रानात्मनो गुरून् व्याहरति श्रीमद्भट्टोजिदीक्षितः—

**अप्पय्यदीक्षितेन्द्रानशेषविद्यागुरूनहं वन्दे ।**
**यत्कृतिबोधाबोधौ विद्वदविद्वद्विभाजकोपाधी' ।"**[2]

एवमप्पयदीक्षितस्याऽप्यस्य गुरुत्वे सन्देहाऽवकाशो नाऽस्ति ।

## ३. नृसिंहाश्रममुनिः

अद्वैतवेदान्ताचार्यत्वेन प्रख्यातोऽयं श्रीनृसिंहाश्रममुनिः खिष्टीयषोडशशताब्द्यां वाराणसीक्षेत्रमलञ्चकार । नाम्नैव ज्ञायते यदयं कोऽपि विशिष्टः संन्यासी विद्वांश्चाऽऽसीत् । स्वयमात्मानं 'यति'-शब्देन निर्दिशत्यसौ, यथा—

'नृसिंहविज्ञापनमेतदित्थं **नृसिंहनाम्ना यतिना** व्यधायि ।'[3]

---

१. शिवलीलार्णवम्, १.६
२. तत्रैवोपोद्घाते ।
३. नृसिंहविज्ञापनम्, २४३

संन्यासाश्रमस्वीकरणात् प्राक् किंनामधेयोऽयमासीदिति न ज्ञायते। श्रीजगन्नाथाश्रम इत्यासीदेतस्य गुरुवर्यस्य नामेत्येतदपि तेनैव समसूचि—

'जगन्नाथाश्रमगुरोश्चित्रं चरणरेणवः।
वाचामगोचरेऽप्यर्थे मूकं वाचालयन्ति माम्॥'[1]

श्रीनृसिंहाश्रममुनिभिर् बहवो ग्रन्था अद्वैतसिद्धान्तप्रकाशनपरा विरचिताः; यथा— अद्वैतदीपिका, अद्वैतपञ्चरत्नम्, संक्षेपशारीरकव्याख्या तत्त्वबोधिनी, पञ्चपादिकाविवरण-भावप्रकाशिका, भेदधिक्कारः, वेदान्ततत्त्वविवेकः, दीपनम् (वेदान्ततत्त्वविवेकस्य स्वोपज्ञ-व्याख्या), नृसिंहविज्ञापनञ्च। एषु केचिदेव अद्वैतदीपिका-वेदान्ततत्त्वविवेक-दीपन-नृसिंह-विज्ञापनप्रमुखा ग्रन्थाः प्रकाशिता विराजन्ते, अन्ये ग्रन्थाः सम्पादनं प्रकाशनञ्चाऽपेक्षन्ते।

एतस्य नृसिंहाश्रममुनेः शिष्या अपि प्रख्याताः प्रतिष्ठिताश्चाऽऽसन्। श्रीनारायणाश्रम एतेषु मुख्योऽस्ति। एतेन श्रीनृसिंहाश्रममुनिविरचितभेदधिक्कारनामधेयस्य ग्रन्थस्य भेद-धिक्कारसत्क्रियाव्याख्या व्यरचि। यथोक्तं तेनैव—

'इति श्रीनृसिंहाश्रममुनिश्रीचरणपरिचरणनिरतनारायणाश्रमविरचिता भेदधिक्कारसत्क्रिया समाप्ता।'[2]

श्रीरङ्गराजाध्वरीन्द्रः तत्पुत्रोऽप्पयदीक्षितश्चापि तच्छिष्यत्वेन प्रसिद्धौ स्तः[3] किन्तु विषयेऽस्मिन् किमपि निश्चितं प्रमाणं नोपलभ्यते। प्रसिद्धस्य वेदान्तपरिभाषासञ्ज्ञकप्रकरण-ग्रन्थस्य रचयिता श्रीधर्मराजाध्वरीन्द्रः श्रीनृसिंहाश्रममुनिं स्वपरमगुरुत्वेनोल्लिखति—

'यदन्तेवासिपञ्चास्यैर्निरस्ता भेदिवारणाः।
तं प्रणौमि नृसिंहाख्यं यतीन्द्रं परमं गुरुम्॥'[4]

भट्टोजिदीक्षितस्य कनीयान् भ्राता रङ्गोजिभट्टः श्रीनृसिंहाश्रममुनिं स्वकीयेऽद्वैतचिन्ता-मणिनामधेये ग्रन्थे 'तदुक्तं श्रीनृसिंहाश्रमगुरुचरणैः' इत्येवमसकृद् गुरुतया प्रमाणतया च

---

१. तत्रैव, २४५, तथा च—'इति श्रीमत्परमहंस-परिव्राजकाचार्यश्रीमज्जगन्नाथाश्रम-श्रीमत्पूज्यपादशिष्यश्रीमद्वेदान्तसिद्धान्तसाराभिज्ञश्रीनृसिंहाश्रममुनिविरचितो भेद-धिक्कारः सम्पूर्णः।'—भेदधिक्कारः, पुष्पिका।

२. तत्रैव, सत्क्रियाव्याख्यायाः पुष्पिका। श्रीनारायणाश्रम इमं श्रीनृसिंहाश्रममुनिं गुरुशब्देन निर्दिशति, यथा—'काशते कलितं यस्य पदं वैदिकमस्तकैः।
भक्तमुक्त्यै समीहन्तं तं नृसिहं गुरुं भजे॥'
भेदधिक्कारसत्क्रिया, २

३. 'अस्यैव नृसिंहाश्रमस्य विद्याशिष्यौ रङ्गराजाध्वरी तत्सूनुरप्पयदीक्षितश्च बभूवतुः।'
नृसिंहविज्ञापनम्, भूमिका—पृ० १

४. वेदान्तपरिभाषा, २

प्रस्तौति । स्वयं भट्टोजिदीक्षितोऽस्य नृसिंहाश्रममुनेः सकाशाद् अद्वैतवेदान्तज्ञानमधिगतवान् तद्विरचितवेदान्ततत्त्वविवेकनामधेयस्य ग्रन्थस्य दीपनाख्यस्वोपज्ञव्याख्याया 'विवरण'-टीकामपि विरचितवान् ।[1] रङ्गोजिभट्टस्य नृसिंहाश्रमशिष्यत्वे नाऽस्ति कोऽपि सन्देहः; यतो हि—नृसिंहाश्रमोऽयं स्वयं रङ्गोजिभट्टेनैव स्वगुरुत्वेन निर्दिष्टः । यद्यपि भट्टोजिदीक्षितस्य तच्छिष्यत्वविषये न काऽपि तादृशी प्रबलप्रमाणरूपा सूक्तिः स्वोक्तिर्वा समुपलब्धाऽस्त्येतावता कालेन, तथापि वेदान्तसिद्धान्ते गम्भीरं ज्ञानम्, सहजगतिम्, कर्तृत्वं च वीक्ष्य भट्टोजिदीक्षितस्य स्वाऽनुजेन रङ्गोजिभट्टेन सह नृसिंहाश्रमस्य शिष्यता सुतरां सम्भवाऽस्ति ।

## (४) रुक्माङ्गदः सुधीः ?

एतेनैव विद्वद्वर्येण प्रेरितो भट्टोजिदीक्षितो 'तन्त्राधिकारिनिर्णय'—नामधेयं ग्रन्थं विरचितवानिति भट्टोजिदीक्षितेनैव स्वकीये तन्त्राधिकारिनिर्णयस्याऽऽरम्भमङ्गलश्लोकयोः विशदतया प्रत्यपादि, यथा—

'शुद्धवैदिकमार्गेण शिवमाराधयन् सदा ।
द्विजेन्द्रोऽसौ विजयते श्रीमान् रुक्माङ्गदः सुधीः ॥
तस्य धर्मैकनिष्ठस्य कुतन्त्रध्वान्तभास्वतः ।
प्रीतये पाञ्चरात्रादेरधिकारी निरूप्यते ॥'[2]

एतस्य विदुषो विषये न किमपि ज्ञायते श्रूयते वा । उपर्युक्तविवरणेनैतदवश्यं प्रतिभाति यदयं रुक्माङ्गदः शिवभक्तः श्रौतस्मार्तसम्प्रदायप्रवर्तकश्चाऽऽसीत्, पाञ्चरात्रागमविषयेऽस्या-

---

१. द्रष्टव्यमत्र—'वेदान्त का पाठ नृसिंहाश्रम से पढा था जिनकी 'तत्त्वविवेक' नामक टीका पर इन्होंने स्वयं विवरण नाम्नी टीका लिखी थी ।'

—काशी की पाण्डित्य परम्परा, पृ० ५८

तथा च- 'काशी के अद्वैत वेदान्त के प्रौढ तथा प्रचुर लेखक नृसिंहाश्रम भट्टोजिदीक्षित के गुरु थे । उन्होंने १५४७ ई० में अपना दार्शनिकग्रन्थ 'वेदान्ततत्त्वविवेक' (या तत्त्वविवेक) तथा उसके अगले वर्ष उस पर स्वोपज्ञ व्याख्यान 'दीपन' का निर्माण किया । इस दीपन व्याख्या पर व्याख्या लिखी भट्टोजिदीक्षित ने जिसका नाम 'वाक्यमाला' या 'दीपनव्याख्या' अथवा 'तत्त्वविवेकटीकाविवरण' है ।

—संस्कृत शास्त्रों का इतिहास, पृ० ५०२

तथा च—'नृसिंहाश्रम, teacher of भट्टोजि, Composed his तत्त्वविवेक in 1547 A.D.'

— History of Sanskrit Poetics, p. 324

२. तन्त्राधिकारिनिर्णयः, २-३, पृ० १

ऽप्रामाण्यबुद्धिरासीत्, सम्भाव्यते चाऽस्याऽद्वैतवादविषये गौरवबुद्धिः। किन्तु कोऽयमासीद् रुक्माङ्गदः सुधीः इति प्रश्नस्त्वनुत्तीर्ण एवाऽवतिष्ठते । अस्य प्रश्नस्य समाधानमुद्दिश्य विकल्पद्वयं सम्मुखमायाति । उपर्युक्तेष्वेवाचार्येषु कोऽप्येको भवितुमर्हति रुक्माङ्गद इत्येकः पक्षः। तत्रापि शेषश्रीकृष्णो रुक्माङ्गदो भवितुं नार्हति, भट्टोजिदीक्षितस्याऽस्मिन् श्रद्धाया अभावात्, भिन्नसम्प्रदायाऽवलम्बित्वाच्च। अतोऽप्पयदीक्षितो नृसिंहाश्रमो वा रुक्माङ्गदः स्यादिति प्रथमः पक्षः। द्वितीयः पक्षस्त्वयमेव यद् रुक्माङ्गदोऽयमुपर्युक्ताचार्येभ्यो भिन्नः कोऽपि नूतन आचार्यः, यस्य विषये कुत्रापि किमप्यभिहितं नोपलभ्यते ।

## भट्टोजिदीक्षितस्य गुरुद्रोहित्वम्

श्रीरामचन्द्राचार्यविरचितायाः प्रक्रियाकौमुद्याश्चर्चाऽस्माभिः पूर्वमकारि । एतदपि निरूपितं यत्तैस्तैर्विद्वद्वर्यैरेतस्याः प्रक्रियाकौमुद्या बह्वो व्याख्याग्रन्था विरचिता इति । केचन ग्रन्थाः प्रकाशिताः सन्ति केचनाऽप्रकाशिता हस्तलिखितग्रन्थागारशरणा एव विराजन्ते। एतासु व्याख्यासु द्वे व्याख्येऽतिप्रसिद्धे स्तः। ग्रन्थकर्तुः पौत्रो विट्ठलाचार्योऽस्ति 'प्रसाद-नामधेयायाः प्रथमव्याख्याया रचयिता । 'प्रक्रियाप्रकाश'—नामधेयाया द्वितीयाया व्याख्याया रचयिताऽस्ति शेषश्रीकृष्णाचार्यः। अयमेव शेषश्रीकृष्णाचार्यो भट्टोजिदीक्षितस्य गुरुरासीद्। अस्यैव शेषश्रीकृष्णस्य सन्निधावुपविश्याऽनेन व्याकरणशास्त्रविषयकं ज्ञानं समधिगतम्। विषयोऽयमस्माभिर् 'भट्टोजिदीक्षितस्य गुरवः' इत्यत्र पूर्वमेव प्रपञ्चितः। कालान्तरेऽनेनैव भट्टोजिदीक्षितेन स्वगुरोः शेषश्रीकृष्णस्य 'प्रक्रियाप्रकाश'-व्याख्यायां प्रतिपादितानि मतानि स्वकीयायां प्रौढमनोरमायामनेकत्र खण्डितानि । पण्डितराजजगन्नाथः शेषश्रीकृष्णात्मजस्य शेषवीरेश्वरस्य शिष्य आसीत्। स्वगुरोः (शेषवीरेश्वरस्य) पितुः (शेषश्रीकृष्णस्य) मतानि तच्छिष्येण भट्टोजिदीक्षितेनैव दूष्यमाणानि दृष्ट्वा सोढुं न शशाक पण्डितराजजगन्नाथोऽयम्। फलतः प्रौढमनोरमायाः खण्डनायैवाऽनेन 'मनोरमाकुचमर्दनी'—नामको ग्रन्थो व्यरचि। एतत्सर्वं मनोरमाकुचमर्दिन्या उपोद्घात एव स्पष्टीभवति—

'लक्ष्मीकान्तपदाम्भोजं प्रणम्य श्रेयसां पदम्।
पण्डितेन्द्रो जगन्नाथः स्यति गुर्वं गुरुद्रुहाम् ॥

**इह खलु केचिन्निखिलविद्वन्मुकुटमणिमयूखमालालालितचरणकमलानां गीर्वाणगुरुगौरवग्रासमांसलमहिममण्डिताखण्डमहीमण्डलानां शेषावतंसानां श्रीकृष्णाख्यचिरायार्चितयोः पादुकयोः प्रसादादासादितशब्दानुशासनास्तेषु च पारमेश्वरपदं प्रयातेषु कलिकालवशंवदीभवन्तस्तत्रभवद्भिरुल्लासितं प्रक्रियाप्रकाशमाशयानवबोघनिबन्धनैर्दूषणैः स्वयं निर्मितायां मनोरमायामाकुल्यकार्षुः सा च प्रक्रियाप्रकाशकृतां पौत्रैरखिलशास्त्रमहार्णवमन्थाचलायमानमानसानामस्मद्गुरुवीरेश्वरपण्डितानां तनयैर्दूषिता अपि स्वमतिपरीक्षार्थं पुनरस्माभिरपि निरीक्ष्यते ।'**[1]

---

१. मनोरमाकुचमर्दिनी, उपोद्घातः

स्पष्टतयाऽत्र पण्डितराजजगन्नाथेन भट्टोजिदीक्षितस्य गुरुद्रोहित्वेनोल्लेखोऽकारि। एतदत्र विचारणीयमस्ति यद् भट्टोजिदीक्षितकृतं गुरुमतखण्डनमिदं रागद्वेषनिबन्धनमुत रागद्वेषातीतविद्याऽनुरागित्वमात्रनिबन्धनम्। कृते च विचारे युक्तिं पश्याम उभयत्रापि। भट्टोजिदीक्षितेन स्वगुरोः शेषश्रीकृष्णस्य प्रक्रियाप्रकाशगतमतान्यनेकत्र दूषितानीति विषयस्तु प्रायः सर्वविदित एव, किन्तु तत्कृतखण्डनमिदं सर्वथा युक्तिविरहितं नाऽस्ति। खण्डनाय युक्तिः परमावश्यिका भवति। अतः खण्डनं सर्वत्र युक्तिपूर्वकमेव भवति। अत्राऽप्यस्ति तथैव। यथा पण्डितवर्येण भट्टोजिदीक्षितेन युक्तिपूर्वकं चिन्तितं तथैव सत्यनिष्ठाऽनुरोधान्निगदितम् इत्येवमपि भवितुमर्हति। इत्थं खण्डनमिदं रागद्वेषातीतविद्याऽनुरागित्वसत्यनिष्ठाऽनुरोधमात्रनिबन्धनमिति सुतरां वक्तुं शक्यते।

खण्डनमिदं रागद्वेषमात्रनिबन्धनमित्यपि नाऽस्ति सर्वथाऽसम्भवम्। प्रक्रियाकौमुदीकारो रामचन्द्राचार्यो वंशतो वैष्णवसम्प्रदायावलम्ब्यासीत्। अयमासीच्छेषवंशीय आन्ध्रदेशवास्तव्यो ब्राह्मणः। शेषश्रीकृष्णः शेषवंशीयो महाराष्ट्रप्रदेशवास्तव्यो ब्राह्मण आसीद् वैष्णवश्च। उभयोराचार्ययोर्वंशस्यैकत्वे प्रमाणं नाऽस्ति किमपि। नामसाम्यं वंशस्यैकत्वभ्रमं जनयति। भट्टोजिदीक्षितः स्मार्तसम्प्रदायाऽवलम्ब्यासीदद्वैतवादी च।[1] भट्टोजिदीक्षितस्यैको गुरुरप्पयदीक्षितोऽप्यासीत्। विषयोऽयमस्माभिः 'भट्टोजिदीक्षितस्य गुरवः' इति शीर्षकान्तर्गतं पूर्वमेव प्रतिपादितः। एतस्याऽप्पयदीक्षितस्य विष्णुवैष्णवविद्वेषोऽद्वैतसम्प्रदायाऽभिनिवेशश्च जगति प्रसिद्ध एव। यथोक्तं गुरुचरणैः श्रीमदात्मकूरु दीक्षाचार्यैः—

'अर्वाचीना अप्पयदीक्षिता आबाल्यात् स्वयं शाङ्करमताऽवलम्बिनोऽपि केनचित्कारणेन क्रोधाविष्टाः दुरभिनिवेशवशीकृतचेतसः विष्णुवैष्णवप्रद्वेषपरवशाः शिवपारम्यस्थापनैदम्पर्येण प्रवृत्ताः……।'[2]

यथा वा प्रतिपादितं गुरुवर्यैर्नव्यमङ्गलवरदाचार्यैः—

'निरूपयामोऽत्र हि दीक्षितस्य विष्णौ तदीयेषु च वैरिभावम्।
शैवेषु मैत्रीमपि शङ्करार्यप्रतीपगामित्वमपि प्रमाणैः॥'[3]

अद्वैतवेदान्तसिद्धान्तोऽनेन भट्टोजिदीक्षितेन नृसिंहाश्रमगुरोः सकाशादधीतः। तस्यैवाऽद्वैतसम्प्रदायाचार्यगुरुविरचितस्य 'वेदान्ततत्त्वविवेक'-ग्रन्थस्य दीपनाख्याया व्याख्याया भट्टोजिदीक्षितेन 'तत्त्वविवेकदीपनविवरण'-नाम्नी टीकाऽपि विरचिता। एतेनाऽद्वैत-

---

१. द्रष्टव्यम्—'इति श्रीमदद्वैतसिद्धान्तप्रतिष्ठापक—श्रौतस्मार्तसत्सम्प्रदायप्रवर्तक—श्रीमद्भट्टोजिभट्टविरचितस् तन्त्राधिकारिनिर्णयः समाप्तः।'
—तन्त्राधिकारिनिर्णयः, पुष्पिका, पृ० ५२

२. श्रीकण्ठसमालोचनम्, २ (उपोद्घाते)

३. तत्रैव, ५ (ग्रन्थोपक्षेपे)

सिद्धान्ताऽभिनिवेशित्वं नितान्तमस्य सहजं स्वतःसिद्धञ्चेति न साधनमर्हति। एवं यद्यत्र प्रकल्पितः सम्प्रदायभेदो वस्तुतस्तात्त्विकस्तर्हि साम्प्रदायिको विद्वेषो निजव्याकरणशास्त्रगुरोः शेषश्रीकृष्णाचार्यस्य प्रक्रियाप्रकाशगतमतानां खण्डने कोऽपि विशिष्टो हेतुर् भवितुमर्हति।

## भट्टोजिदीक्षितस्य कर्तृत्वम्

श्रीमद्भट्टोजिदीक्षितो नानाविधविद्यानामासीत् पारङ्गतो विद्वानित्येतावता प्रपञ्चितेन निबन्धनेन सुतरां स्पष्टीभवति। व्याकरणशास्त्रवैदुष्यविषये तु प्रत्यक्षमेव प्रमाणम्; इत्यतः प्रमाणान्तराऽन्वेषणप्रयासो व्यर्थ एव। व्यतीतायामपि वर्षाणां चतुःशत्यां तत्प्रवर्तिता 'वैयाकरणसिद्धान्तकौमुदी'-रूपा व्याकरणाऽध्ययनपद्धतिर् उत्तरोत्तरं महत्त्वं बिभर्ति। मीमांसायाम्, धर्मशास्त्रे, अद्वैतवेदान्ते चाऽप्यासीदस्याऽप्रतिहतं वैदुष्यम् इति तद्विरचितेभ्यो ग्रन्थेभ्यो विशदं प्रकाशते। एतद्विरचितव्याकरणशास्त्रभिन्नग्रन्थानां संख्याविषये नाऽस्त्यैकमत्यं विद्वत्सु। पण्डितयुधिष्ठिरमीमांसक-पण्डितशिवदत्त-ऑफ्रेटमहोदयैर्व्याकरणातिरिक्तग्रन्थानां याः सूच्यः स्वस्वग्रन्थेषूपनिबद्धास्ता आधृत्य सूर्यकान्तबाली-महोदयैर् द्वात्रिंशत्संख्याकानां ग्रन्थानां काचन सूची व्यरचि।[1] व्याकरणभिन्नग्रन्थानां सूची यथावदत्र समुपस्थाप्यते:—

१. अद्वैतकौस्तुभः,
२. आचारदीपः, आचारकाण्डं वा,
३. आशौचत्रिंशच्छ्लोकाः,
४. आशौचनिर्णयः,
५. आह्निकम्,
६. कारिका,
७. कालनिर्णयसंग्रहः,
८. गोत्रप्रवरनिर्णयः,
९. चतुर्विंशतिमुनिमतव्याख्या,
१०. चन्दनधारणविधिः,
११. तत्त्वकौस्तुभः,
१२. तत्त्वविवेकदीपनव्याख्या,
१३. तन्त्रसिद्धान्तदीपिका,
१४. **तन्त्राधिकारिनिर्णयः**,
१५. तर्कामृतम्,
१६. तिथिनिर्णयः,

---

१. Bhaṭṭoji Dīkṣita : His Contribution to Sanskrit Grammar, p. 8.

१७. तिथिनिर्णयसंक्षेपः,
१८. तिथिप्रदीपकः,
१९. तीर्थयात्राविधिः,
२०. त्रिस्थलीसेतुः,
२१. त्रिस्थलीसेतुसारसंग्रहः,
२२. दशश्लोकीटीका,
२३. दायभागः,
२४. प्रवरनिर्णयः,
२५. प्रायश्चित्तविनिर्णयः,
२६. मासनिर्णयः,
२७. वेदभाष्यसारः,
२८. श्राद्धकाण्डम्,
२९. संस्कारकाण्डम्,
३०. सन्ध्यामन्त्रव्याख्या,
३१. सर्वसारसंग्रहः,
३२. भट्टोजिदीक्षितीयञ्च ।

एतस्यां सूच्यां प्रदर्शितेषु ग्रन्थेषु सर्वेऽपि ग्रन्था अद्य नोपलभ्यन्ते। ये ग्रन्था उपलभ्यन्ते तेऽपि प्रायोऽप्रकाशिता हस्तलिखितग्रन्थागारेषु संरक्षिताः कञ्चित् समुद्धारकं प्रतीक्षन्ते। एतेषामनुपलब्धानामप्रकाशितानां वा ग्रन्थानां प्रामाणिकत्वे तद्विरचितत्वे वा महतः सन्देहस्याप्यस्त्यवकाशः । केचन ग्रन्थाः प्रकाशिताः सन्ति । एतेषामतिशयमहत्त्वपूर्णग्रन्थानामक्षतं विराजते प्रामाणिकत्वम् ।

सत्स्वप्येतेषु विपुलसंख्याकेषु व्याकरणशास्त्रेतरग्रन्थेषु भट्टोजिदीक्षितस्य कीर्तिर् दिक्षु विदिक्षु सर्वत्र व्याकरणाचार्यत्वेनैव विभ्राजते । एतस्य व्याकरणशास्त्रविषयकाश्चत्वारो ग्रन्थाः सन्त्यतिशयप्रसिद्धाः । तेषां नामानीत्थं परिगणितानि—

१. शब्दकौस्तुभः,
२. वैयाकरणभूषणकारिकाः,
३. वैयाकरणसिद्धान्तकौमुदी,
४. प्रौढमनोरमा च ।

## १. शब्दकौस्तुभः—

व्याकरणशास्त्रविषयकेषु ग्रन्थेषु भट्टोजिदीक्षितेन सर्वप्रथमं शब्दकौस्तुभाख्यो ग्रन्थोऽयं व्यरचि । मूलरूपेणाऽयमस्ति पाणिनिविरचिताया अष्टाध्याय्या वृत्तिरूपो ग्रन्थः, किन्तु महाभाष्ये प्रपञ्चितानां विषयाणामनुशीलनपरिशीलनादिकारणादयं महाभाष्यमूलकोऽपि वक्तुं शक्यते । पातञ्जलमहाभाष्यमधिकृत्य विरचितोऽयं शब्दकौस्तुभो वस्तुतो व्याख्यानग्रन्थ एव ।

अष्टाध्यायीक्रमानुसारिण्यां 'शब्दकौस्तुभ' इति नामधेयायां व्याख्यायां भट्टोजिदीक्षितेन महाभाष्ये पतञ्जलिप्रदर्शिता सरणिरेवाऽनुसृता। शब्दकौस्तुभस्य मङ्गलाचरणे भट्टोजि-दीक्षितेन स्वयमेव समसूचि—

'नत्वा लक्ष्मीधरं तातं सुमनोवृन्दवन्दितम्।
फणिभाषितभाष्याब्धेः शब्दकौस्तुभमुद्धरे ॥'[1]

यद्यपि ग्रन्थोऽयं सम्पूर्णामष्टाध्यायीमधिकृत्य भट्टोजिदीक्षितेन विरचितस्[2] तथाप्यद्याऽपूर्ण एवोपलभ्यते। अष्टाध्यायेषु प्रथममध्यायद्वयम्, तृतीयाध्यायस्य पादद्वयम्, चतुर्थश्च सम्पूर्णो-ऽध्याय इत्येतावानेवांश उपलभ्यतेऽद्य। शब्दकौस्तुभस्याऽस्याऽसम्पूर्णोपलब्धेः कारणं यद्यपि न ज्ञायते समीचीनतया, तथापि विषयेऽस्मिन् काचिज् जनश्रुतिः प्रचलितोपलभ्यते। तदनुसारं भट्टोजिदीक्षितः स्वजीवन एवाऽनितरसाधारणीं प्रसिद्धिं प्रतिष्ठाञ्चाऽवाप्तवान्। एतद् दृष्ट्वा तदुत्कर्षाऽसहिष्णव ईर्ष्यालवश्च केचन तद्विरचितं शब्दकौस्तुभं सञ्चोर्य विनाशितवन्तः। भट्टोजिदीक्षितः स्वाऽसाधारणस्मरणशक्त्या स्मृत्वा ग्रन्थस्य कञ्चनांशं पुनर्लिखितवान्।[3] किन्तु जनश्रुतयस्तु जनश्रुतय एव। नैताः कदापि प्रमाणतया स्वीक्रियन्ते प्रमाणविद्भिः।

## २. वैयाकरणभूषणकारिकाः—

ग्रन्थोऽयं कारिकारूप इति तु ग्रन्थनाम्नैव विशदीभवति। एतस्मिन् ग्रन्थे द्वासप्तति-कारिका निबद्धा उपलभ्यन्ते। 'शब्दकौस्तुभ'-ग्रन्थस्य रचनाया अनन्तरं भट्टोजिदीक्षितेन द्वितीयो 'वैयाकरणभूषणकारिका'-सञ्ज्ञको ग्रन्थो निरमायीति प्रथमयैव कारिकया स्पष्टी-भवति। यथा—

---

१. शब्दकौस्तुभः, ३

२. द्रष्टव्यम्— 'इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितम्।
विस्तरस्तु यथाशास्त्रं दर्शितः **शब्दकौस्तुभे** ॥'
— सिद्धान्तकौमुदी, उत्तरकृदन्त०, अन्ते

तथा च 'विस्तरस्तु शब्दकौस्तुभे बोध्यः'
— प्रौढमनोरमा, (अतो लोपः इति सूत्रे)

अथ च तत्रैव शब्दरत्ने—'शब्दकौस्तुभे पाष्ठे'

एतैरुद्धरणैः सिद्धान्तकौमुद्याः प्रौढमनोरमायाश्च पूर्वमेव समग्रः शब्दकौस्तुभो विरचित आसीदिति सिद्ध्यति।

३. .. jealous of the reputation and recognition of Bhaṭṭojis' works, his opponents stole away the manuscript copy of the **Kaustubha** and, on their part, finally destroyed it. Bhaṭṭoji, however, thanks to his sharp memory, re-wrote some portion of it, and hence the incompleteness of the work even today."
—Bhaṭṭoji Dikṣita : His Contribution to Sanskrit Grammar p. 6

फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः ।
तत्र निर्णीत एवार्थः संक्षेपेणेह कथ्यते ॥"[1]

शब्दकौस्तुभे ये येऽर्था विस्तरेण व्याख्यातास्त एवाऽत्र कारिकासु संक्षेपेण प्रतिपादिताः सन्ति । महाभाष्याश्रितोऽस्ति शब्दकौस्तुभः, शब्दकौस्तुभाश्रिताश्च सन्ति वैयाकरणभूषण-कारिकाः । अनया परम्परया वैयाकरणभूषणकारिका अपि महाभाष्याश्रिताः सन्तीति वक्तुं शक्यते । एतासां कारिकाणामनुशीलनेन स्पष्टीभवति यच्छब्दकौस्तुभरचनायाः प्रयोजनद्वय-मासीत्-(१) पाणिनिसूत्रानाश्रित्य वृत्तिप्रणयनम्, (२) व्याकरणदर्शनमधिकृत्य स्वमन्तव्य-प्रकाशनञ्च । एवं शब्दकौस्तुभ उद्देश्यद्वयस्य साङ्कर्यं सञ्जातम् । तस्यैतस्य साङ्कर्यदोषस्य निराकरणायैकैकमुद्देश्यमधिकृत्य भट्टोजिदीक्षितेन ग्रन्थद्वयं प्रणीतम् । वृत्त्यर्थं वैयाकरणसिद्धान्त-कौमुदी प्रणीता व्याकरणदर्शनप्रपञ्चनाय वैयाकरणभूषणकारिकाश्च ।

## ३. वैयाकरणसिद्धान्तकौमुदी—

अयमस्ति प्रक्रियासम्प्रदायस्य सर्वाधिकमहत्त्वपूर्णः सर्वोत्कृष्टश्च ग्रन्थः । पाणिनीय-व्याकरणाऽध्ययनार्थमयमेव ग्रन्थो निर्विवादरूपेण साम्प्रतं सर्वजनसम्मान्यतया विराजते । यद्यपि भट्टोजिदीक्षितेन सिद्धान्तकौमुदीरचनायाः प्रागेव 'शब्दकौस्तुभः' 'वैयाकरणभूषण-कारिकाः' चेति ग्रन्थद्वयं निरमायि, तथाप्यद्वितीयनिःसपत्नवैयाकरणत्वेनाऽस्य प्रतिष्ठा कौमुदीरचनाऽनन्तरमेव जाता । सिद्धान्तकौमुदीरचनायाः पृष्ठे रामचन्द्राचार्यविरचितायाः प्रक्रियाकौमुद्याः स्वगुरुशेषश्रीकृष्णाचार्यविरचितायाश्च प्रकाशाख्यव्याख्यायाः प्रभावः 'सिद्धान्तकौमुदी' इति ग्रन्थनाम्नैव स्पष्टीभवति । प्रकाशाख्यव्याख्यायाः सिद्धान्तशब्दं[2] प्रक्रियाकौमुदी-शब्दात् कौमुदीशब्दञ्च स्वीकृत्य 'सिद्धान्तकौमुदी' इति ग्रन्थस्य सञ्ज्ञा निरूपिताऽभूत् । सिद्धान्तकौमुदीमिमामुद्दिश्याऽपेक्षितं विवरणमस्माभिरत्रैव 'प्रक्रियापरम्परा भट्टोजिदीक्षितश्च' इति शीर्षकान्तर्गतं विशिष्य न्यरूपीति नेह प्रपञ्च्यते ।

## ४. प्रौढमनोरमा—

भट्टोजिदीक्षितस्याऽयमस्त्यन्तिमो महत्त्वपूर्णश्च व्याकरणशास्त्रविषयको ग्रन्थः । अयं प्रौढमनोरमाख्यो ग्रन्थः सिद्धान्तकौमुद्या व्याख्यारूप एवाऽस्तीति स्वयं ग्रन्थकारेण समसूचि—

'ध्यायं ध्यायं परं ब्रह्म स्मारं स्मारं गुरोर्गिरः ।
सिद्धान्तकौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम् ॥'[3]

---

१. वैयाकरणभूषणकारिकाः, १

२. 'वह्नौ सुवर्णमिव यत्परिशोध्य शब्दालङ्कारनामनि मया विहिते निबन्धे ।
उद्धृत्य सारमिदमीयमिहोपबद्धं सिद्धान्तशुद्धिविबुभुत्सुजनानुरोधात् ॥'
—प्रकाशः, ४५

३. प्रौढमनोरमा, मङ्गलश्लोकः

यद्यप्यत्राऽस्मिन् श्लोके प्रौढमनोरमायाः सिद्धान्तकौमुदीव्याख्यास्वरूपत्वं स्पष्टं प्रतिज्ञातं तथापि सम्यगनुशीलनेन ज्ञायते यदयं ग्रन्थः सिद्धान्तकौमुद्या न व्याख्यानमात्रम्, अपितु व्याख्यास्वरूपत्वेऽपि व्याकरणशास्त्रसम्बन्धिविषयाणां सिद्धान्तानाञ्च स्वातन्त्र्येण प्रतिपादनात् खण्डनमण्डनात्मकं स्वतन्त्रं शास्त्रम्। भट्टोजिदीक्षितेनाऽस्मिन् ग्रन्थेऽनेकपूर्ववर्तिवैयाकरणानां मतानि खण्डयित्वा सिद्धान्तरूपेण स्वपक्षस्य युक्तियुक्तं सबलञ्च प्रतिष्ठापनमकारि। अत्र विमर्शकानां मनसि सहजमेव प्रश्नोऽयं समुदेति यदेतस्यां प्रौढमनोरमायां प्रतिपादिताः सर्वेऽपि सिद्धान्ताः सिद्धान्तकौमुद्यां पूर्वमेव सुष्ठु निरूपिताः, किमर्थं तर्हि तदेव प्रयोजनमनुसन्धाय नूतनग्रन्थस्य निर्माणे प्रवृत्तिर् इति ? एवं प्रतिभाति यत् सिद्धान्तकौमुदीरचनाया अनन्तरम् अद्वितीयवैयाकरणत्वेन प्रतिष्ठितस्याऽस्य सर्वत्र प्रसृतां कीर्तिं दृष्ट्वाऽसहिष्णुतापरवशाः केचन विद्वांसः सभासु विद्वद्गोष्ठीषु च तत्र प्रतिपादितान् सिद्धान्तान् खण्डयितुं दूषयितुञ्च बद्धपरिकरा अभूवन्। तेषां दूषणानां समर्थं प्रबलञ्च निराकरणं यथा भवेत् तथाऽनेनाऽपि विद्वद्वर्येण प्रयतितव्यम्, सम्भवतो ग्रन्थस्याऽस्य रचनाया इयमेवाऽस्ति पृष्ठभूमिः प्रेरणा च।

एवमिमान् व्याकरणशास्त्रविषयकग्रन्थान् बहून् व्याकरणशास्त्रेतरग्रन्थांश्च विरचय्य भट्टोजिदीक्षितोऽयं संस्कृतजगत्यमरः सञ्जातः।

## तन्त्राधिकारिनिर्णयः

भट्टोजिदीक्षितेन व्याकरणशास्त्रभिन्नानां येषां द्वात्रिंशत्संख्याकानां ग्रन्थानां रचनाऽकारि तेषामेका सूची पूर्वमेवाऽस्माभिः प्रादर्शि। तेषु ग्रन्थेषु 'तन्त्राधिकारिनिर्णयः' इति नामधेयोऽस्त्येको महत्त्वपूर्णो विशिष्टश्च ग्रन्थः। ग्रन्थस्यास्य नाम्नैव स्पष्टीभवति यदयं ग्रन्थः तन्त्राधिकारिनिर्णयार्थं प्रणीतो विराजते। प्रथमं तावत् 'तन्त्राधिकारिनिर्णयः' इति ग्रन्थनाम्ना किमस्त्यभिप्रेतं भट्टोजिदीक्षितस्येति सम्यगनुशीलनीयम्। तन्त्राणामधिकारी तस्य निर्णयः तन्त्राधिकारिनिर्णयः इत्यर्थस्तु स्फुट एव।

### तन्त्रशब्दस्यार्थः तन्त्रसाहित्यस्य वैविध्यञ्च

तन्त्रशब्दस्तु 'तनु विस्तारे' इति तनादिगतोभयपदिधातोः कर्त्रादौ ष्ट्रन् ('सर्वधातुभ्यः ष्ट्रन्' उ० २/१५९) प्रत्यये कृते तनोति तन्यते वेति तन्त्रम् इत्यस्मिन्नर्थे निष्पद्यते। अर्थश्चायं तन्त्रग्रन्थेष्वपि स्वीकृतः। यथोक्तं विष्णुसंहितायाम्—

'सर्वेऽर्था येन तन्यन्ते त्रायन्ते च भयाज्जनाः।
इति तन्त्रस्य तन्त्रत्वं तन्त्रज्ञाः परिचक्षते॥'[1]

यथा वाऽभिहितं कालिकातन्त्रे—

---

१. विष्णुसंहिता, २.१०, ११

'तनोति विपुलानर्थान् तत्त्वमन्त्रसमन्वितान् ।
त्राणं च कुरुते यस्मात् तन्त्रमित्यभिधीयते ॥'[१]

इत्येवं तन्त्रशब्दस्य 'शास्त्रविशेषः' इत्यर्थः सुतरां संगच्छते । आगमशब्दोऽपि 'शास्त्रविशेषः' इत्यस्मिन्नेवार्थे प्रयुज्यते । तस्यैतस्य तन्त्रनामधेयस्य शास्त्रस्य वैदिकाऽवैदिकभेदेनाऽस्ति द्वैविध्यं प्रसिद्धम् । बौद्धादितन्त्राण्यवैदिकतन्त्रेष्वन्तर्भवन्ति । वैदिकानि तन्त्राणि शैवशाक्त-वैष्णवभेदेन त्रिधा विभक्तानि सन्ति । शैवतन्त्राणि कापालकालामुखपाशुपतशैवभेदेन चतुर्धा भिद्यन्ते । दक्षिणाचार-वामाचारभेदेन शाक्ततन्त्राणि द्विधा भिन्नानि सन्ति । वैष्णव-तन्त्राणामपि पाञ्चरात्रवैखानसभेदेन द्वौ भेदौ प्रसिद्धौ स्तः । तन्त्रशास्त्रस्यैतद्वैविध्यमधः प्रदर्शितेन चित्रेण स्पष्टीभवति—




## तन्त्राधिकारिनिर्णयस्य प्रतिपाद्यो विषयः

एतस्य विस्तृतस्य तन्त्रशास्त्रस्य कोऽस्त्यधिकारी अधिकारविशिष्टो वेत्यस्ति तन्त्रा-धिकारिनिर्णयस्याऽस्य प्रतिपाद्यो विषयः । यद्यपि ग्रन्थनाम्नाऽयमेव विषयो ग्रन्थकर्त्रा प्रतिज्ञातोऽस्ति तथापि समग्रस्य ग्रन्थस्य सम्यगनुशीलनेन ज्ञायते यदत्र सर्वस्याऽपि तन्त्रशास्त्र-स्याधिकारिणां प्राधान्येन निरूपणं नोपलभ्यते, केवलं पाञ्चरात्रशास्त्रस्याऽधिकारिणश्चर्चा सुविशदं प्रकाशतेऽत्र । उपक्रमोपसंहारदर्शनादप्ययमेव ग्रन्थस्य प्रतिपाद्यो विषयो निस्सन्दिग्ध-तया प्रमाणितो भवति । तद्यथोपक्रमः—

'तस्य धर्मैकनिष्ठस्य कुतन्त्रध्वान्तभास्वतः ।
प्रीतये पाञ्चरात्रादेरधिकारी निरूप्यते ॥'[२]

———————

१. कालिकातन्त्रम्, भारतीय तन्त्रशास्त्र, पृ० ३०५ (उदाहृतम्)
२. तन्त्राधिकारिनिर्णयः, ३

'पाञ्चरात्रादेरधिकारी निरूप्यते' इत्येवं प्रतिज्ञातं ग्रन्थोपक्रमे। ग्रन्थनामाऽनुरोधेन ग्रन्थोऽयं 'तन्त्राणामधिकारी निरूप्यते' अथवा 'सर्वतन्त्राणामधिकारी निरूप्यते' इत्येवमारभ्येत। न चाऽऽरभ्यते। पाञ्चरात्रस्यैव प्रधाननिरूपणीयविषयत्वं प्रतिज्ञातमवगम्यते, तस्य नाम्नोल्लेखात्। एवमेव ग्रन्थस्योपसंहारोऽपि द्रष्टव्योऽस्ति। तद्यथा—

'उभयथापि वैदिकान् प्रति पाञ्चरात्रादयो नाऽनुष्ठापका इति निर्विवादमेव। तस्मात् पतितादय एव शङ्खचक्राद्यङ्कनादावधिकारिण इति सिद्धम्।'[1]

अत्रोक्तं शङ्खचक्राद्यङ्कनं पाञ्चरात्रतन्त्राणामेव मुख्यः प्रतिपाद्यविषयः। एवं यथोपक्रान्तं तथैवोपसंहृतम्। उभयत्र पाञ्चरात्रतन्त्राणामेव प्रधानतया चर्चाविषयत्वमभिहितम्। एवं च सति 'पाञ्चरात्राधिकारिनिर्णयः' 'पाञ्चरात्राद्यधिकारिनिर्णयः' इति ग्रन्थनाम प्रतिपाद्यविषयानुरोधेनाधिकमौचित्यावहं भवेत्। न केवलमुपक्रमोपसंहारयोरपितु समग्रेऽपि ग्रन्थे सर्वत्र पाञ्चरात्रतन्त्रमेव मुख्यप्रतिपाद्यविषयतया प्रकाशते।

## पाञ्चरात्रतन्त्राणां प्रामाण्याऽप्रामाण्यविमर्शः

पाञ्चरात्रागमानामप्रामाण्यं शङ्कराचार्येण कुमारिलभट्टेन च सर्वप्रथमं स्वकीये शारीरकभाष्ये तन्त्रवार्तिके च विशदतया प्रत्यपादि। ततः पूर्वं पाञ्चरात्राऽप्रामाण्यवादी कोऽप्यासीदिति तु वयं न जानीमः। शङ्कराचार्याऽनुसारमप्रामाणिकानि पाञ्चरात्रतन्त्राणि, यतो ह्यत्र जीवोत्पत्तिः वेदनिन्दा च प्रतिपादिताऽवलोक्यते।[2] सर्वञ्चैतद् वेदविरुद्धम्, तस्मादप्रामाण्यं पाञ्चरात्रतन्त्राणाम्। कुमारिलभट्टेनापि पाञ्चरात्रशास्त्रस्य वेदविरुद्धार्थप्रतिपादनादप्रामाण्यं स्वकीये तन्त्रवार्तिके स्पष्टतया न्यरूपि।[3] एतदनन्तरं पाञ्चरात्राऽप्रामाण्यवादिनां काचन विशदपरम्परैवाऽऽविर्भूता दृष्टिपथमुपयाति। प्रायः सर्वेऽपि वैष्णवेतरब्रह्मसूत्रभाष्यकाराः पाञ्चरात्राऽऽगमविषयकं 'उत्पत्त्यसम्भवाऽधिकरणम्' शङ्कराचार्यप्रदर्शिते-

---

१. तत्रैव, पृ० ५२

२. (क) 'न वासुदेवसञ्ज्ञकपरमात्मनः सङ्कर्षणसञ्ज्ञकस्य जीवस्योत्पत्तिः सम्भवति।'
—ब्र०सू०, शां०भा०, ४.२.४२

(ख) 'चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधिगतवानित्यादिवेदनिन्दादर्शनात्'
—तत्रैव, ४.२.४५

३. 'यान्येतानि त्रयीविद्भिर्न परिगृहीतानि किञ्चित्तन्मिश्रधर्मकञ्चुकच्छायापतितानि लोकोपसंग्रहलाभपूजाख्यातिप्रयोजनपराणि त्रयीविपरीताऽसम्बद्धदृष्टशोभादिप्रत्यक्षानुमानोपमानार्थापत्तिप्राययुक्तिमूलोपनिबद्धानि सांख्ययोगपाञ्चरात्रपाशुपतशाक्यग्रन्थपरिगृहीतधर्माधर्मनिबन्धनानि······।'
मीमांसादर्शनम्, (तन्त्रवार्तिकम्) १.३.४ पृ० ११२

नैव वर्त्मना व्याख्यातवन्तः। कुमारिलभट्टेन च पाञ्चरात्रनिराकरणाय काचिदन्यैव सरणि-रङ्गीकृता। एतदनुसारमपि पाञ्चरात्रागमानां सुदृढमस्त्यप्रामाण्यम्, तत्र प्रतिपादितदीक्षाऽपवर्गयोः साध्यसाधनसम्बन्धे प्रमाणाऽभावात्, उपनयनादिसंस्कृतानामपि भगवदाराधनाऽधिकाराऽवाप्त्यर्थं दीक्षालक्षणविलक्षणाऽवैदिकसंस्कारवर्णनात्, जात्या 'कर्मणा च त्रयीमार्गादपभ्रष्टभागवतजनपरिग्रहकारणात्, विद्यास्थानेष्वपरिगणनात्, लोकव्यामोहनार्थत्वात्, पौरुषेयत्वात्, पाषण्डत्वेन परिगणनाच्च।[1]

एतदनन्तरं जयन्तभट्टेनाऽत्रोत्थापितानामाक्षेपाणां प्रबलं निराकरणमकारि स्वकीयायां न्यायमञ्जर्याम्, न्यायकलिकायाम्, आगमडम्बरे च। एतन्मतानुसारं वेदागमयोः प्रामाण्यप्रकारे किमप्यन्तरं नाऽस्ति। यथा पाञ्चरात्रागमाः पौरुषेयाः सर्वज्ञेश्वरप्रणीतत्वात्, तथैव वेदा अपि सर्वज्ञेश्वरप्रणीतत्वात् पौरुषेया एव। अतएव समानमेव प्रामाण्यमुभयोः। जयन्तभट्टाऽनन्तरं विशिष्टाद्वैतदर्शनस्य प्रसिद्धेनाऽऽचार्येण यामुनाचार्येण 'आगमप्रामाण्यम्' इति नामधेयं ग्रन्थरत्नं व्यरचि। ग्रन्थोऽयमनेनाचार्यवर्येण पाञ्चरात्रागमानां प्रामाण्यस्थापनामुद्दिश्यैव विरचितः। शङ्कराचार्यकुमारिलभट्टोपस्थापितानां प्रायः सर्वेषामप्याक्षेपाणां समुचितं युक्तियुक्तं प्रबलञ्च निराकरणं ग्रन्थेऽस्मिन् द्रष्टुं शक्यते।

विशिष्टाद्वैतसम्प्रदायप्रवर्तकाचार्यैः श्रीमद्रामानुजाचार्यैः स्वपरमगुरुयामुनाचार्यप्रदर्शितामिमामेव व्याख्यानसरणिमवलम्ब्य स्वकीये श्रीभाष्याभिधे शारीरकभाष्ये पाञ्चरात्राधिकरणापरपर्यायम् उत्पत्त्यसम्भवाधिकरणं व्याख्यातं समीचीनतया। एतस्मिन्नधिकरणे पाञ्चरात्रप्रामाण्यस्थापनमेवाऽस्ति बादरायणस्याऽभिप्रेतमित्येतैराचार्यवर्यैरत्र सुष्ठु प्रतिपादितम्। तदनन्तरं त्रयोदश-चतुर्दशख्रिष्टाब्दे शताधिकग्रन्थनिर्मात्रा प्रसिद्धाचार्येण श्रीमद्वेदान्तदेशिकेन स्वग्रन्थेषु पाञ्चरात्रप्रामाण्यं युक्तिपूर्वकं बलपूर्वकञ्च समर्थितम्। पाञ्चरात्रविषयनिरूपणार्थैतद्विरचितः 'पाञ्चरात्ररक्षा'-नामधेयो ग्रन्थः प्रसिद्ध एवाऽस्ति। एतदतिरिक्त सर्वैरपि ब्रह्मसूत्रभाष्यकारैः पाञ्चरात्रप्रामाण्यमधिकृत्याऽनुकूलतयाऽननुकूलतया वाऽनुशीलितमुत्पत्त्यसम्भवाऽधिकरणमिदम्। पाञ्चरात्रप्रामाण्याऽप्रामाण्यविमर्शात्मकम् एतन्महत्त्वपूर्णं साहित्यं भट्टोजिदीक्षितात् पूर्वं विरचितं प्रतिष्ठितञ्चाऽऽसीत्।

## तन्त्राधिकारिनिर्णयस्य वैशिष्ट्यम्

एवं भट्टोजिदीक्षितस्य 'तन्त्राधिकारिनिर्णय'-ग्रन्थस्य रचनायाः पूर्वमेतावती साहित्यसम्पदा पृष्ठभूमित्वेनाऽऽसीत्। पाञ्चरात्राऽऽगमप्रामाण्यमधिकृत्य कुमारिलभट्टस्य शङ्कराचार्यस्य च मतानि तन्त्राधिकारिनिर्णये विस्तरेण समुदाहृतानि विराजन्ते। किन्तु महत आश्चर्यस्य विषयोऽयमस्ति यत् कुत्राऽप्यस्मिन् ग्रन्थे यामुनाचार्यस्य, रामानुजाचार्यस्य, जयन्तभट्टस्य, वेदान्तदेशिकस्य च नामान्यपि द्रष्टुं न शक्यन्ते, तत्प्रतिपादितसिद्धान्तानां

---

१. सर्वोऽप्ययं विषयः पूर्वपक्षत्वेन यामुनाचार्यविरचिते 'आगमप्रामाण्य'-नामधेये ग्रन्थे विशदतया प्रपञ्चितो वर्तते।

समावेशस्य तु कथैव का। कथं वा भवितुमेवमर्हति यद् भट्टोजिदीक्षितसदृशः प्रामाणिको विद्वान् यामुन-रामानुजसदृशान् सम्प्रदायप्रवर्तकाचार्यान् न जानाति, जानाति चेन्नोदाहरति। भट्टोजिदीक्षितस्य गुरुरप्पयदीक्षितो वेदान्तदेशिकेन तथा प्रभावित आसीद् यथा विरोधिसम्प्रदायस्थेनाऽप्यनेन तद्विरचितयादवाभ्युदयमहाकाव्यस्य काचन टीका विरचिता। वेदान्तदेशिकविरचितयोः पादुकासहस्रहंससन्देशयोरपि टीकेऽनेन विरचित इति निगद्यते, किन्तु टीकाद्वयमिदं साम्प्रतं नोपलभ्यते। तस्यैतस्याऽप्पयदीक्षितस्य शिष्यो भट्टोजिदीक्षितस्तमपि वेदान्तदेशिकं न जानातीति न विश्वासपदवीमधिरोहति।

प्रश्नस्त्वयं समुदेति यत् सत्स्वप्यनेकेषु पाञ्चरात्रप्रामाण्याऽप्रामाण्यवादिषु स्वनामधन्याचार्यविरचितेषु तेषु तेषु ग्रन्थेषु तन्त्राधिकारिनिर्णयाऽऽख्यस्याऽस्य ग्रन्थस्य रचनायाः किं नामौचित्यमिति। नूतनग्रन्थस्य रचनायां किमप्यौचित्यं भवत्येव। अतः सर्वप्रथममिदमेवाऽस्माभिर् विचारणीयं यत् तन्त्राधिकारिनिर्णयाख्ये ग्रन्थेऽस्मिन् किं कोऽपि विषयो नूतनतया प्रतिपादितोऽस्ति न वा। ग्रन्थस्य सम्यगनुशीलनेन ज्ञायते यद् वस्तुतोऽत्राऽस्ति काचिन्नूतनताऽपूर्वता वा। कीदृशी च साऽपूर्वतेति जिज्ञासायां निरूप्यते।

भट्टोजिदीक्षितात् प्राक् सर्वेषामप्याचार्याणामुद्देश्यं पाञ्चरात्रादितन्त्राणामप्रामाण्यनिरूपणं प्रामाण्यस्थापनञ्चाऽऽसीत्। तत्राऽप्रामाण्यनिरूपणं यथा—

शङ्कराचार्यः स्वकीयशारीरकभाष्यस्योत्पत्त्यसम्भवाधिकरणे वेदविरुद्धार्थप्रतिपादनादेव भागवताऽपरपर्यायपाञ्चरात्रागमानामप्रामाण्यं साधयति। तदनुसारं पाञ्चरात्रागमेषु वेदविरुद्धा जीवोत्पत्तिर् वेदनिन्दा च प्रपञ्चिताऽवलोक्यते। जीवोत्पत्तिर् वेदनिन्दा चेति हेतुद्वयं प्राधान्येन प्रदर्शितं शङ्कराचार्येण। तस्माद् वेदविरुद्धत्वादप्रामाण्यमेतेषां पाञ्चरात्रागमानाम्। एतदनन्तरं प्रायः सर्वेऽपि वैष्णवेतरशारीरकभाष्यकारा अवैदिकत्वादेव हेतोः पाञ्चरात्राऽप्रामाण्यं साधितवन्तः कुमारिलभट्टेनाऽपि वेदविरुद्धत्वादेव हेतोः पाञ्चरात्राद्यागमानामप्रामाण्यं साधितम्। एतदर्थं ये हेतवस्तेनोक्ताः तेषां चर्चाऽस्माभिः पूर्वम् (२६ पृष्ठे) अकारि। तेषां सर्वेषां हेतूनामुद्देश्यमेतेषामागमानामप्रामाण्यसाधनमेवाऽस्ति। पाञ्चरात्राप्रामाण्यवादिष्वाचार्येषु शङ्कराचार्यः कुमारिलभट्टश्चेत्येतदाचार्यद्वयमेव मुख्यतममस्ति। यद्यपि सन्त्यन्येऽप्यप्रामाण्यवादिन आचार्याः किन्तु प्रायस्तत्तैदुक्तार्थस्यैवाऽनुवादकत्वमस्ति।

तदनन्तरं प्रामाण्यवादिन आचार्याः सम्मुखमायान्ति। यामुनाचार्योऽस्त्येतेषु प्रधानभूतः; सम्प्रदायप्रवर्तको रामानुजाचार्यश्च। अन्ये प्रामाण्यवादिन आचार्याः प्रायस्तत्प्रदर्शितमध्वानमेवाऽनुसरन्ति।

एवं भट्टोजिदीक्षितात् प्राक् पाञ्चरात्राद्यागमविषयकी या चर्चा प्राचलत् तस्याः केन्द्रस्थो विषयः प्रामाण्यसिद्धिरप्रामाण्यसिद्धिर्वाऽऽसीत्। सम्प्रति तन्त्राधिकारिनिर्णयस्याऽस्य क इवास्ति प्रतिपादनीयांश इत्यस्माभिः परिशीलनीयम्। ग्रन्थोऽयं तन्त्राणां प्रामाण्यमप्रामाण्यं वा विचारयितुं न प्रवृत्तः। वस्तुतो भट्टोजिदीक्षितेनाऽत्रेदम्प्रथमतया 'को वास्तय-

धिकारी पाञ्चरात्रतन्त्राणाम्' इत्ययं विषयो विमर्शपदवीमानीतः। इदमेवाऽस्ति वैशिष्ट्यं ग्रन्थस्यैतस्य। प्रतिज्ञातञ्चैतत् प्रस्तावनायां ग्रन्थकारेण। यथा—

'तस्य धर्मैकनिष्ठस्य कुतन्त्रध्वान्तभास्वतः।
प्रीतये **पाञ्चरात्रादेरधिकारी** निरूप्यते॥'[1]

'तन्त्राधिकारिनिर्णयः' इत्यत्र प्रयुक्तस्य तन्त्रशब्दस्यार्थो ग्रन्थकारेण स्वयमेव स्पष्टीकृत एतस्मिन् श्लोके पाञ्चरात्रादेरधिकारीति कथयता। तन्त्रस्याऽधिकारी तन्त्राधिकारी। कस्य तन्त्रस्य ? पाञ्चरात्रादेः। पाञ्चरात्रस्य नाम्नोल्लेखात् प्राधान्यम्, अन्येषां तन्त्राणाम् 'आदि'-शब्देन निर्देशाद् अप्राधान्यञ्च सुतरामुक्तं भवति। तन्त्राणामेतेषामप्रामाण्यप्रतिपादनं नाऽस्ति ग्रन्थस्याऽस्य प्रतिपाद्यो विषयः। अप्रामाण्यमेतेषां पूर्वपक्षरूपेणैव निर्दिष्टमुपलभ्यते। यथा—

'स्यादेतत्, पाञ्चरात्रादीनां प्रामाण्ये सत्यधिकारिविशेषचिन्ता युज्यते। तदेव तु दुर्लभम्।'[2]

अत्रोक्तस्य पाञ्चरात्रादीनामप्रामाण्यस्य सिध्यर्थं प्रमाणरूपेण कौर्म-वासिष्ठलैङ्ग-हेमाद्रिश्राद्धकाण्ड-सूतसंहिता-पराशरपुराणादीनां वचनान्युदाहृतानि विराजन्ते। एषाऽप्रामाण्योक्तिस्तत्सिद्धिश्च पूर्वपक्षरूपेणैव प्रस्तुताऽस्ति ग्रन्थकारेण। वस्तुतो पाञ्चरात्रादितन्त्राणामप्रामाण्यं भट्टोजिदीक्षितस्येष्टं नाऽस्ति। यथा तेनैवोक्तम्—

'तस्मात् कौर्म-वासिष्ठलैङ्ग-ब्रह्मवैवर्त-पराशरपुराणादीनां पूर्वमीमांसायां हेमाद्रिमाधवनिबन्धानाञ्च पर्यालोचनया पाञ्चरात्रादीनामप्रामाण्यमिव लक्ष्यते, इति चेत्, अत्राच्यते-अस्ति तावदमीषां प्रामाण्यम्।'[3]

यद्यस्त्येतेषां तन्त्राणां प्रामाण्यं तर्हि पूर्वोदाहृतानामप्रामाण्यप्रतिपादकानां कौर्मादिवचनानां का गतिः स्यात्, इतीमां शङ्कां स्वयमेवोत्थाप्य निराकरोति ग्रन्थकारः। यथा—

'न चैवं प्रागुक्तकौर्मादिवचनविरोधः। वैदिकं प्रत्यननुष्ठापकत्वे तात्पर्यात्।'[4]

भवतु नाम वेदविरुद्धांशस्याऽप्रामाण्यम्, किन्तु योंऽशो वेदाऽविरुद्धः तस्य प्रामाण्यं कथं न स्यात्। वस्तुतो मीमांसकास्तत्रापि प्रामाण्यं न स्वीकुर्वन्ति।[5] सूतसंहितावचनमुदाहृत्य भट्टोजिदीक्षितो वेदाऽविरुद्धांशस्य प्रामाण्यमित्थं समर्थयति—

---

१. तन्त्राधिकारिनिर्णयः, ३
२. तत्रैव, पृ० १
३. तत्रैव, पृ० १०
४. तत्रैव
५. द्रष्टव्यम्—'तस्माद्यावत्परिगणितवेदादिशास्त्रव्यतिरिक्तनिबन्धनं तद्धर्मप्रमाणत्वेनाऽपेक्षितव्यमिति।' तन्त्रवार्तिकम्, पृ० १२४

'उक्तञ्च मुक्तिखण्डे चतुर्थाऽध्याये--

तथापि योंऽशो मार्गाणां वेदेन न विरुद्ध्यते ।
सोंऽशः प्रमाणमित्युक्तं केषाञ्चिदधिकारिणाम् ।।

इति । वेदाऽविरुद्धांशे प्रामाण्यं किं न स्यादित्याशङ्क्य तद्भवत्येवाधिकारिविशेषं प्रतीत्याह तथाऽपीति माधवः ।'[1]

सूतसंहिता-वासिष्ठलैङ्गादीनां वचनानि प्रमाणत्वेनोदाहृत्य ग्रन्थकारस्याऽस्त्ययं निष्कर्षो यदधिकारिविशेषं प्रति पाञ्चरात्रादीनां प्रामाण्यं निस्सन्दिग्धमेवेति न सर्वथाऽप्रामाण्यमेतेषाम्—

'इत्यत्र ह्यधिकारिविशेषं प्रति पाञ्चरात्रादीनां प्रामाण्यं स्पष्टमेव लभ्यते । न चाऽत्र **तस्मात्त्वं पाञ्चरात्रोक्त**–इत्यादि भगवद्वचनेन सर्वान् प्रति प्रामाण्यमेवोक्तम् ।'[2]

एवमधिकारिविशेषं प्रति पाञ्चरात्रादीनां प्रामाण्ये सिद्धे सति तादृशोऽधिकारिविशेषः को वाऽस्तीति सहजः प्रश्नः समुल्लसति मनसि । प्रश्नमिमं स्वयमेवोत्थाप्य भट्टोजिदीक्षितस्याऽत्रेदमुत्तरमस्ति—

'इममेव शाण्डिल्यं स्मारयद्भिराचार्यैरधिकारिभेदेनैव प्रामाण्यं विभावितम् । स्यादेतत्, एवमपि **तन्त्रेषु कोऽधिकारी को नेति चेत्** ? उच्यते–

शापाद् वा गौतमादीनां पापाद् वा महतो नराः ।
ये गता वेदबाह्यत्वं ये च सङ्कीर्णयोनिजाः ।
तेऽधिक्रियन्ते तन्त्रादौ स्त्रीशूद्राश्च यथायथम् ।।'[3]

एतदनन्तरं कूर्मपुराणस्य वचनान्युदाहृत्यैव प्रतिपादयति ग्रन्थकारः—

'अत्र च भ्रष्टानां कथञ्चिद् गतिप्राप्तये आगमाः प्रणीता इत्युक्त्या तेषां भ्रष्टाधिकारित्वम्, भ्रष्टान् प्रति प्रामाण्यञ्च स्पष्टमेव ।'[4]

एवमेवाऽग्रेऽपि—

---

१. तन्त्राधिकारिनिर्णयः, पृ० १०
२. तत्रैव, पृ० १८
३. तत्रैव
४. तत्रैव, पृ० २१

'पाञ्चरात्रादीनां न श्रुतिपुराणसाम्यं किन्तु पतितादीन् प्रत्येवाऽनुष्ठापकत्वम्, कालविलम्बेन कथञ्चिदुपकारकत्वं चेति तस्मिन्नेव प्रघट्टके माधवः ।'[1]

तथा च—

'इत्थं श्रुतिभ्रष्टानामागमेष्वधिकारः सिद्धः । तथा सङ्करजानामप्यधिकारः कौर्मे द्वात्रिंशेऽध्याये दर्शितः ।'[2]

अपि च—

'स्त्रीशूद्राधिकारो भागवते दशमस्कन्धे दर्शितः—

तेनोक्तं सात्वतं तन्त्रं यज्ज्ञात्वा मुक्तिभाग् भवेत् ।
यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः ॥'[3]

अन्ते चैवमुपसंहृतं ग्रन्थकारेण—

उभयथापि वैदिकान् प्रति पाञ्चरात्रादयो नाऽनुष्ठापका इति निर्विवादमेव । तस्मात्पतितादय एव शङ्खचक्राङ्कनादावधिकारिण इति सिद्धम् ।'[4]

एवं ग्रन्थकारानुसारं पाञ्चरात्रादीनामागमानां सर्वथा नाऽप्रामाण्यम् । वस्तुतोऽस्त्येतेषां वैदिकान् प्रत्यप्रामाण्यम्, पतितान् (श्रुतिभ्रष्टान्, सङ्करजान्, कुण्डगोलकादीन्, स्त्रीशूद्रादींश्च) प्रति च प्रामाण्यम् । सर्वेऽपि पूर्वाचार्याः तन्त्राणां प्रामाण्याऽप्रामाण्यविषयिकीं चर्चां कृतवन्तः स्वग्रन्थेषु । किन्तु भट्टोजिदीक्षितस्य विचारणीयविषयः पूर्वाचार्येभ्यो भिन्नः 'कः खलु तन्त्राणामधिकारी' इत्येतादृशी भवत्यापातप्रतीतिर् ग्रन्थावलोकनात्, इदमेवाऽस्ति वैलक्षण्यं वैशिष्ट्यञ्च भट्टोजिदीक्षितस्य । किन्तु विचारे क्रियमाणे न किमपि वास्तविकमन्तरं भट्टोजिदीक्षितपूर्वाचार्ययोर्मध्ये दृष्टिपथमुपयाति । पतितादीन् प्रति प्रामाण्यस्य निर्धारणमपि फलतस्तेषां तन्त्राणामप्रामाण्य एव पर्यवस्यति । यथा मीमांसकमतं प्रस्तुवन् यामुनाचार्यो निगदति—

एवं जात्या कर्मणा च त्रयीमार्गादपभ्रष्टभागवतजनपरिग्रह एव पाञ्चरात्रशास्त्रप्रतिक्षेपाय पर्याप्तो हेतुः ।'[5]

---

१. तत्रैव, पृ० २९
२. तत्रैव, पृ० ३३
३. तत्रैव, ३४
४. तत्रैव, पृ० ५२
५. आगमप्रामाण्यम्, पृ० १७

एतदपि विचारणीयमत्र, विपुलं खल्वस्ति स्मृतिपुराणसाहित्यम्। एतस्य साहित्यस्य बृहदंशः पाञ्चरात्रादितन्त्राणां प्रबलो विरोधी, तादृशोऽन्योंऽशश्च तेषां प्रबलः समर्थकः। कूर्मपुराण-पराशरपुराण - सूतसंहिता - वसिष्ठसंहिता - बृहन्नारदीयपुराण - लिङ्गपुराणादीनि पाञ्चरात्रादिविरोधिसाहित्ये क्रोडीभवन्ति। एवमेव विष्णु-नारदीय-भागवत-गरुड-पद्म-वराहादिसात्त्विकपुराणानि, अन्याः काश्चन स्मृतयश्च पाञ्चरात्रशास्त्रं सोत्साहं मुक्तकण्ठेन समर्थयन्ति। एवं सति स्वमनोऽनुकूलं पाञ्चरात्रविरोधि साहित्यमुदाहृत्य, पाञ्चरात्र-प्रशंसकसाहित्यञ्च तिरस्कृत्य पाञ्चरात्राऽप्रामाण्यघोषणा, पतितादीन् प्रति तन्त्राधिकारि-त्वनिर्णयश्च कथमिव न्याय्यो भवितुमर्हति सकलप्रमाणवृत्तयाथात्म्यविरुद्धत्वात्। अत्रेय-मुक्तिर् नितान्तं प्रासङ्गिकी प्रतिभाति—

'यत्रोभयोः समो दोषः परिहारोऽपि वा समः।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे॥'

उपक्रान्तस्य विमर्शस्याऽस्याऽवसाने भगवद्यामुनाचार्यस्येमां सूक्तिमुदाहृत्य विरम्य-तेऽस्माभिः—

'श्रुतिमूर्ध्नि प्रसिद्धेन वासुदेवेन भाषितम्।
तन्त्रं मिथ्येति वक्तुं नः कथं जिह्वा प्रवर्तते॥'[1]

## सम्पादनमधिकृत्य

मैसूरुनगरस्थ-श्रीब्रह्मतन्त्रपरकालमठस्य त्रयस्त्रिंशत्तमपीठाधिपतीनां मुखाद् १९६३-६४ खिष्टाब्दे तेषां सन्निधावुपविश्याऽध्ययनकाले ग्रन्थस्याऽस्य नाम बहुशोऽश्रौषम्। तदाप्रभृति बलवती खल्वासीदेतद्ग्रन्थदिदृक्षा। ग्रन्थश्चायं नाऽऽसीत् सुलभः। पण्डितटीकादत्तधीतालेन प्रकाशिता ग्रन्थस्याऽस्यैका प्रतिः संयोगवशात् किञ्चित्कालाऽनन्तरं मम दृष्टिपथमुपगता। अशुद्ध्यादिदृष्ट्या, पंक्तिलेखनदृष्ट्या च ग्रन्थोऽयं कस्माच्चिद् हस्तलिखितग्रन्थाद् विशिष्टो नाऽऽसीत्। कः खल्वस्ति ग्रन्थकारस्याऽभिप्रेतोऽर्थः' इति ज्ञानमपि दुःशकमासीत्। तदाप्रभृति मम मनस्येवमेवाऽऽसीद् यद् यदि ग्रन्थस्याऽस्य काचिद् हस्तलिखिता प्रतिः कुतश्चित् स्थानात् प्राप्येत तर्हि पाठालोचनपूर्वकं सुसम्पाद्य ग्रन्थोऽयमवश्यं प्रकाशयिष्यः। दुर्लभा खल्वा-सीद् ग्रन्थस्याऽस्य हस्तलिखितप्रतिः। बहुप्रयासाऽनन्तरमेका हस्तलिखितप्रतिः प्रयागस्थ-राजकीयाऽभिलेखागारात् समधिगता। तदनन्तरमेवैतयोर् मुद्रितहस्तलिखितयोर् ग्रन्थयोः समाश्रयणेन यथाशक्ति सम्पादनकार्यं समारब्धम्। समारम्भस्याऽस्य फलमुपस्थाप्यतेऽद्य सुधीनां पुरतः। ययोः प्रत्योः समाश्रयणेन समनुष्ठितं कार्यमिदम्, तयोः संक्षिप्तः परिचय इत्थमस्ति—

———————

१. तत्रैव, पृ० ९०

A. इति संकेतेन निर्दिष्टा बनारसनगरस्थ-नेपाली-सौभाग्य-पुस्तकालय-दुग्धविनायकस्थानात् प्रकाशिता। उपलब्धा प्रतिः जीर्णा शीर्णा चाऽस्तीत्यतः प्रकाशनतिथिर्न प्राप्यते।

B. इति संकेतेन निर्दिष्टा प्रयागस्थ-राजकीयाऽभिलेखागारे संरक्षिता मातृका १३३३५ संख्याका, ४० पत्रात्मिका, सम्पूर्णा देवनागराक्षरैर्लिखिता च।

एवमेतयोर् द्वयोरेव प्रत्योः साहाय्येन यथाशक्ति सुसम्पाद्य ग्रन्थोऽयं सहृदयानां सुधीनां पुरतः समुपस्थाप्यते। प्रयागस्थ-राजकीयाऽभिलेखागारस्याऽधिकारिणः प्रति कार्तज्ञ्यप्रकाशनं वस्तुतो मदीयं पुण्यकर्तव्यमेव येषां सौजन्यवशादुपलब्धोपरिनिर्दिष्टा हस्तलिखिता ग्रन्थप्रतिर् ग्रन्थस्याऽस्य सम्पादने प्रकाशने च निमित्तमभूत्। अन्ते च यैर्विद्वद्भिर्महानुभावैश्चैतस्मिन् सम्पादनकर्मणि प्रवृत्तस्य मम भृशमुपकृतं तेभ्यः सर्वेभ्यः शब्दपुष्पाञ्जलयः समर्प्यन्ते कृतज्ञेन मया।

१९९६ अशोककुमार कालिया
लखनऊ

## सन्दर्भ-ग्रन्थाः


| | |
|---|---|
| अद्वैतचिन्तामणिः | रङ्गोजिभट्टः, गवर्नमेण्ट संस्कृत लाइब्रेरी, बनारस १९२० |
| काशी की पाण्डित्य परम्परा | बलदेव उपाध्याय, प्रथम संस्करण, विश्वविद्यालय प्रकाशन, वाराणसी-१; १९८३ |
| तन्त्राधिकारिनिर्णयः | भट्टोजिदीक्षितः |
| नृसिंहज्ञापनम् | नृसिंहाश्रमः; द प्रिंसेज़ ऑफ वेल्स सरस्वती भवन टेक्टस् संख्या ५२, बनारस सिटी, १९३४ |
| पण्डितराजकाव्यसंग्रहः | सं० डॉ० आर्येन्द्र शर्मा, द संस्कृत अकेडेमी, ओसमानिया यूनिवर्सिटी, हैदराबाद, १९५८ |
| पातञ्जलं महाभाष्यम् | पतञ्जलिः, भट्टोजिदीक्षितविरचितशब्दकौस्तुभसहितम्, वाणी विलास प्रकाशन, वाराणसी; १९८८ |
| प्रक्रियाकौमुदी | रामचन्द्राचार्यः, शेषश्रीकृष्णविरचितप्रकाशव्याख्या-सहिता, सं० मुरलीधर-मिश्रः, सम्पूर्णानन्द संस्कृत विश्वविद्यालयः वाराणसी; १९७७ |
| प्रक्रियाकौमुदीविमर्शः | डॉ० आद्याप्रसाद मिश्रः, वाराणसेय-संस्कृतविश्व-विद्यालयः, वाराणसी; १९६६ |
| प्रौढमनोरमा | भट्टोजिदीक्षितः, प्रभा-विभा-ज्योत्स्नासंवलिता सशब्द-रत्ना, चौखम्बा संस्कृत सीरीज़ आफिस, बनारस सिटी; १९९१ |
| ब्रह्मसूत्रभाष्यम् | शङ्कराचार्यः, श्रीकामकोटिकोशस्थानम्, मद्रास; १९५४ |
| भारतीय तन्त्रशास्त्र | दुर्लभ बौद्ध ग्रन्थ शोध योजना, केन्द्रीय उच्च तिब्बती शिक्षा संस्थान, सारनाथ, वाराणसी, १९९५ |
| भेदधिक्कारः | नृसिंहाश्रमः, नारायणाश्रमविरचितभेदधिक्कारसत्क्रिया-व्याख्यासनाथः, बनारस संस्कृत सीरिज़ संख्या ८६; १९०४ |
| मध्वतन्त्रमुखमर्दनम् | अप्पयदीक्षितः, सं० पण्डितरामनाथदीक्षितः, प्रकाशकः-पण्डितरामनाथदीक्षितः, हनुमान् घाट, बनारस; १९४१ |
| मनोरमाकुचमर्दिनी | पण्डितराजजगन्नाथः, उपर्युल्लिखितप्रौढमनोरमोप-निबद्धा। |
| मीमांसादर्शनम् (द्वितीयो भागः) | जैमिनिः, कुमारिलप्रणीततन्त्रवार्तिकसहितशाबरभाष्यो-पेतम्, तृतीयसंस्करणम्, आनन्दाश्रम, पुणे; १९५४ |
| रसगंगाधरः | पण्डितराजजगन्नाथः, संस्कृतव्याख्याकारः-पण्डित बदरीनाथ झा, हिन्दीव्याख्याकारः-पण्डितमदनमोहनझा, |

| | |
|---|---|
| | विद्याभवन संस्कृत ग्रन्थमाला, चौखम्बाविद्याभवन, चौक, बनारस-१, १९५५ |
| विष्णुसंहिता | सं०-टी० गणपति शास्त्री, अनन्तशयन संस्कृत ग्रन्थावली LXXXV, त्रिवेन्द्रम; १९२५ |
| वेदान्तपरिभाषा | धर्मराजाध्वरीन्द्रः, अखिल भारतीय संस्कृत - परिषद्, लखनऊ; २०२१ विक्रमाब्दः |
| वैयाकरणसिद्धान्तकौमुदी (प्रथमभागः) | भट्टोजिदीक्षितः, बालमनोरमा-तत्त्वबोधिनीसहिता, सं०-पण्डितगिरिधरशर्मा चतुर्वेदः परमेश्वरानन्द शर्मा च, मोतीलाल बनारसीदास, दिल्ली-वाराणसी-पटना-मद्रास; पुनर्मुद्रणम्–१९८६ |
| वैयाकरणसिद्धान्तकौमुदी (द्वितीयभागः) | भट्टोजिदीक्षितः, बालमनोरमातत्त्वबोधिनीसहिता, सं० गिरिधरशर्मा चतुर्वेदः परमेश्वरानन्द शर्मा च, मोतीलाल बनारसीदास, दिल्ली-वाराणसी-पटना-बंगलौर-मद्रास; पुनर्मुद्रणम्—१९९१ |
| वैयाकरणसिद्धान्तकौमुदी (तृतीयभागः) | भट्टोजिदीक्षितः, बालमनोरमा-तत्त्वबोधिनीसहिता, सं० गिरिधरशर्मा चतुर्वेदः परमेश्वरानन्दशर्मा च, मोतीलाल बनारसीदास, दिल्ली-वाराणसी-पटना-बंगलौर-मद्रास; पुनर्मुद्रणम्—१९८९ |
| वैयाकरणसिद्धान्तकौमुदी (चतुर्थभागः) | भट्टोजिदीक्षितः, बालमनोरमा-तत्त्वबोधिनीसहिता, सं० गिरिधरशर्मा चतुर्वेदः परमेश्वरानन्दशर्मा च, मोतीलाल बनारसीदास, दिल्ली-वाराणसी-पटना-बंगलौर-मद्रास; पुनर्मुद्रणम्—१९८७ |
| श्रीकण्ठसमालोचनम् | श्रीनव्यमङ्गलवरदाचार्यः, श्रीमद्वेदान्तदेशिकविहारसभा, महीसुरपुरी; १९६३ |
| संस्कृतशास्त्रों का इतिहास | बलदेव उपाध्याय, वाराणसी; १९८९ |

## आङ्ग्लभाषाग्रन्थाः

| | |
|---|---|
| Bhaṭṭoji Dikṣita : His Contribution to Sanskrit Grammar | Surya Kant Bali, Munshiram Manohar Lal Publishers Pvt. Ltd. 1976 |
| History of Sanskrit Poetics | P. V. Kane, Motilal Banarasidass, Delhi : Varanasi : Patana, 1961 |
| Systems of Sanskrit Grammar | Shripad Krishna Belvalkar, Second revised edition, Bharatiya Vidya Prakashan, Delhi-7, Varanasi-1; 1976 |

—o—

# तन्त्राधिकारिनिर्णयः

विश्वेशं सच्चिदानन्दं वन्दे यश्[1]चाखिलं जगत् ।
चरीकर्ति बरीभर्ति सञ्जरीहर्ति लीलया ॥ १ ॥
शुद्धवैदिकमार्गेण शिवमाराधयन् सदा ।
द्विजेन्द्रोऽसौ विजयते श्रीमान् रुक्माङ्गदः सुधीः ॥ २ ॥
तस्य धर्मैकनिष्ठस्य कु[2]तन्त्रध्वान्तभास्वतः ।
प्रीतये पाञ्चरात्रादेरधिकारी निरूप्यते ॥ ३ ॥

स्यादेतत्, पाञ्चरात्रादीनां प्रामाण्ये सत्यधिकारिविशेषचिन्ता युज्यते । तदेव तु दुर्लभम् । तथाहि कौर्मे एकादशाऽध्याये —

कापालं पाञ्चरात्रं[3] च यामलं वाममार्हतम् ।
एवंविधानि चाऽन्यानि मोहनार्थानि तानि तु ॥
ये कुशास्त्राभियोगेन मोहयन्तीह मानवान् ।
मया सृष्टानि शास्त्राणि मोहायैषां भवान्तरे ॥

(कूर्म०, १२.२६२, २६३)

इति पाञ्चरात्रादीनां मोहकत्वमुक्तम् । तथा वासिष्ठे लैङ्गे नवमाऽध्याये—

अङ्किताश्च भविष्यन्ति देवतायुधलाञ्छनैः ।
नराणां नामरूपाभ्यां युगान्ते समुपस्थिते ॥
पाञ्चरात्रं प्रशंसन्ति केचिद् भागवतं मुने[4] ।
केचित्कापालमिच्छन्ति केचित्पाशुपतं मुने ॥

---

१. योऽखिलं B
२. कतन्त्र B
३. The Printed text of *Kūrmapurāṇa* reads भैरवञ्चैव in place of पाञ्चरात्रम्
४. मने B

केचिद् बौद्धं प्रशंसन्ति केचिद् दैगम्बरं मुने ।
केचिल्लोकायतं ब्रह्मन् केचित् सोमं महामुने ॥
नाकुलं केचिदिच्छन्ति तथा केचित्तु भैरवम् ।
केचिद् वामं प्रशंसन्ति केचिच्छाक्तं तथैव च ॥
शाम्भवं केचिदिच्छन्ति यामलं भुवि केचन ।
अन्यानि यानि शास्त्राणि विरुद्धानि महामुने ॥
स्वतःप्रमाणभूतेन वेदेन मुनिसत्तम ।
तान्येव श्रद्धया युक्ताः परिगृह्य द्विजातयः ॥
आचरन्ति महापापा युगान्ते समुपस्थिते ।

इति । हेमाद्रौ श्राद्धकाण्डे ब्रह्मवैवर्ते शम्भु[1] रुवाच—

नग्नांस्त्वं[2] भगवन् सम्यक् ममादा[3] परिपृच्छतः ।
आचक्ष्व सर्वथा सर्वान् विस्तरेण[4] यथातथम् ॥
एवमुक्तो महातेजा बृहस्पतिरुवाच तम् ।
पुरा देवासुरे युद्धे निर्जितेष्वसुरेष्वथ ॥
पाखण्डाऽधिकृताः सर्वे ह्येते सृष्टाः स्वयम्भुवा ।
तपश्चरत्सु सर्वेषु असुरेषु जयार्थिषु ॥
विष्णुः सुदुस्तरां मायामास्थाय[5] सुरचोदितः ।
मोहयामास योगात्मा तपोविघ्नाय तान् प्रभुः ॥
सुमूढान् बुद्धरूपेण तानुवाच महामनाः ।
शक्या[6] जेतुं सुराः सर्वे युष्माभिरिति दर्शनैः ।
बौद्धं धर्मं समास्थाय[7] शाक्यास्ते तु बभूविरे ।
तानुवाचार्हतेमं मे यूयं भूत्वा च मद्विधाः ॥
ज्ञानेन सहितं धर्मं तेनार्हन्त इति स्मृताः ।
बुद्धश्रावकनिर्ग्रन्थाः सिद्धपुत्रास्[8] तथैव च ॥

---

१. शंयु B
२. नग्नान् स A
३. ममाद्य B
४. विस्वरेण B
५. मास्ठाय B
६. शाक्या B
७. समास्छाय B
८. सिद्धपत्रास् B

एते सर्वेऽपि चार्हन्तो विज्ञेया दुष्टचारिणः ।
त्रयीक्लेशं समुत्सृज्य जीवते[1]त्यब्रवीत्[2] यान् ॥
जीवका नाम ते जाताः सर्वधर्मबहिष्कृताः ।
यान् भूत्वाऽऽदित्यवद् व्योम्नि धर्मान् वै प्रत्यपादयत् ॥
कापिलास्तेऽपि सम्प्रोक्ताः कपिलो हि दिवाकरः ।
चरध्वं तानुवाचेदं मच्छासनमतिद्युति ॥
चरकास्तेऽपि विज्ञेया अधर्मा[3]चरणाच्छकाः[4] ।
दीर्घं चिर[5]मिति प्रोक्तं सूक्ष्मं वा धर्म-रूपकम् ॥
धर्मं चरध्वमित्युक्ता यस्मात्ते दीर्घचक्षुषा ।
चीराणि चैव नीलानि बिभ्राणा-श्चीरका[6]स्ततः ॥
एष बोक्षोऽ[7]तिसंशुद्धो धर्मस्तं श्रयतेति यान् ।
उवाच मायया विष्णुस्ते हि चौक्षाः प्रकीर्तिताः ॥
सत्त्वं सर्वेषु भूतेषु भगवानिति चाब्रवीत् ।
सात्त्वतास्तेऽपि विज्ञेया उक्ता भागवताश्च ते ॥
विड्भक्षाश्चैव ये केचित् कपालकृतभूषणाः ।
शैवाः पाशुपताश्चाऽन्ये पाञ्चरात्रास्तथापरे ॥
तथाऽन्ये च दुरात्मानः[8] सर्वेऽप्यसुरदैवताः ।
पा-शब्देन त्रयीधर्मः पालनाज्जगतः स्मृतः ॥
तं खण्डयन्ति[9] यस्मात्ते पाखण्डास्तेन हेतुना[10] ।
ततस्ते कर्मणा बद्धा इहाऽसम्यग्व्यवस्थिताः ॥
असुरेभ्यः पुनर्जाता भावितारतेन कर्मणा ।
निरयं प्राप्य तैरेव कर्मभिर्भाविताः[11] पुनः ॥

---

१. जीयते A
२. तु B
३. अधर्म B
४. छपढाः B
५. चरमिति A
६. बिभ्राणा धीरका A
७. वोक्तो A
८. दरात्मानः B
९. खण्डयति A
१०. हेतना B
११. भाविता A

बौद्धश्रावकनिर्ग्रन्थाः शाक्या जीवककापिलाः ।
चरका[1]–श्चीरकाश्चौक्षाः सिद्धपुत्राः ससात्वताः[2] ॥
नैरात्म्यवादिनश्चैव अयज्ञा नास्तिवादिनः ।
वर्तमानास्त्वधर्मेषु जायन्ते तु पुनः पुनः ॥
वृथा जटी वृथा मुण्डी वृथा नग्नाश्च ये नराः ।
एतेऽन्ये च त्रयीबाह्या सर्वे नग्नादयो जनाः ॥

**सूतसंहितायां** मुक्तिखण्डे चतुर्थाऽध्याये[3]—

पाञ्चरात्रादिमार्गाणां वेदमूलत्वमास्तिके ।
न हि स्वतन्त्रास्ते तेन भ्रान्तिमूला निरूपणे ॥
(सूतसंहितायाम्, मुक्तिखण्डे, ४.१५, १६)

इति पाञ्चरात्रादीनां तैः स्वयमेव वेदमूलताऽनङ्गीकाराद् वेदविरुद्धाऽनेकार्थोपदेशाच्च स्मृति-पुराणादिवन्न यावन्मूलोपलम्भम्, किन्तु[4] सर्वथैवाऽप्रामाण्यमित्याह पाञ्चरात्रेति—'वेदमूलत्वं न हि किन्तु स्वतन्त्राः । हि–शब्दो वेदमूलत्वविरहे तदीयशास्त्रप्रसिद्धिमाह । आपाततः प्रमाण-वदाभासेऽपि निरूपणे भ्रान्तिमूला एवेत्यर्थ' इति[5] तद्व्याख्यायां (सूतसंहिता, मुक्ति० ४.१६) **माधवः** । 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्[6]' (जै० सू०, १.३.३) 'हेतुदर्शनाच्चेति' (जै० सू०, १.३.४) जैमिनीयसूत्रद्वयं व्याचक्षाणा भट्टपादा अप्याहुः[7]—

"यान्येतानि त्रयीविद्भिर्न परिगृहीतानि किञ्चित्तन्मिश्रधर्मकञ्चुकच्छायापतितानि लोकोपसङ्ग्रहलाभपूजाख्यातिप्रयोजनपराणि त्रयीविपरीताऽसम्बद्धदृष्टशोभादिप्रत्यक्षाऽनुमानोप-मानार्थापत्तिप्राययुक्तिमूलोपनिबद्धानि सांख्ययोगपाञ्चरात्रपाशुपतशाक्यनिर्ग्रन्थपरिगृहीत[8]-धर्माधर्मनिबन्धनानि[9] विष[10]चिकित्सावशीकरणोच्चाटनोन्मादनादिसमर्थकतिपयमन्त्रौषधिकादा-चित्कसिद्धिनिदर्शनबलेनाऽहिंसासत्यवचनदमदानदयादिश्रुतिस्मृतिसंवादिस्तोकार्थ — गन्धवासित-

———————

१. वरका A
२. सात्त्वता A
३. चतुर्थोध्याये B
४. कि त B
५. B omits इति
६. त्वनुमानम् B
७. अथाहुः B
८. परिगृहीतानि B
९. धर्मानिबन्धनानि A
१०. पुरुष A, पुरुष B

जीविकाप्राया[1]र्थान्तरोपदेशीनि, यानि च बाह्यतराणि म्लेच्छाचारमिश्रकभोजना[2]चरण-निबन्धनानि तेषामेवैतच्छ्रुतिविरोधहेतु[3]-दर्शनाभ्यामनपेक्षणीयत्वं प्रतिपाद्यते। न चैतत् क्वचिदधि-करणान्तरे निरूपितं न चाऽवक्तव्यमेव[4] गाव्यादिशब्दवाचकत्वबुद्धिवदतिप्रसिद्धत्वात्[5],

यदि ह्यनादरेणैषां न कथ्येताऽप्रमाणता[6] ।
अशक्यैवेति मत्वाऽन्ये भवेयुः समदृष्टयः ॥
शोभासौकर्यहेतूक्तिकलिकालवशेन च ।
यज्ञोक्तपशुहिंसादित्याग — भ्रान्तिमवाप्नुयुः ॥
... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ...
त्रयीमार्गस्य सिद्धस्य ये ह्यत्यन्तविरोधिनः ।
अनिराकृत्य तान् सर्वान धर्मशुद्धिर्न लभ्यते ॥
महाजनपरिगृहीतत्वं पित्राद्यनुगमादि च ।
तेऽपि द्वीपान्तरापेतं वदन्त्येव स्वदर्शने ॥

तत्र श्रद्धामात्रमेवैकं व्यवस्थानिमित्तं सर्वेषां स्वपितृपितामहादिचरितानुयायित्वात्। यैश्च मानवादिस्मृतीनामपि उत्सन्नवेदशाखामूलत्वमास्थीयते तान् प्रति सुतरां शाक्यादिभिरपि[7] शक्यं तन्मूलत्वमेव वक्तुम्। को हि शक्नुयाद् उत्सन्नानां वाक्यविषये इयत्तानियमं कर्तुम्। ततश्च यावत् किञ्चित् कियन्तमपि कालं कैश्चिदाद्रियमाणं प्रसिद्धिं गतं तत् प्रत्यक्षशाखाविसंवादेऽप्युत्सन्न-शाखामूलत्वावस्थानु[8]भवतुल्यकक्षतया प्रतिभायादत आह— विरोधे त्वनपेक्षं स्यादिति। पारतन्त्र्यं तावदेषां स्मर्यमाण[9]पुरुषविशेषप्रणीतत्वात् तैरेव प्रतिपन्नं वेदमूलत्वं पुनस्तत्तुल्यकेन स्मृतिवचनेन विरुध्यते। शाक्यादिवचनानि तु कतिपयनियमदानादिवचनवर्जं सर्वाण्येव समस्तचतुर्दशविद्यास्थान-विरुद्धानि त्रयीमार्गव्युत्थित[10]-विरुद्धाचरणैश्च बुद्धादिभिः प्रणीतानि।

---

१. प्राप्त्य A
२. भोजन B
३. B omits हेतु
४. न वा वक्तव्यमेव A, न वाऽवक्तव्यमेव B
५. अतिप्रसक्तत्वात् A
६. कथ्येताप्रामाणता B
७. शाक्यादिरपि B
८. मूलत्वावस्थामूलानु० B
९. स्मर्यमाणस्य A
१०. व्युत्पित्सित A

लोभादिकारणं चाऽत्र बह्वेवाऽन्यत्प्रतीयते ।
यस्मिन् सन्निहिते दृष्टे नाऽस्ति मूलान्तरानुमा[1] ॥
... ... ... ... ... ... ... ... ...
एत एव च ते एषां वाङ्मात्रेणाऽपि नाऽर्चनम् ।
पाखण्डिनो विकर्मस्था हेतुकाश्चैत एव हि ॥

एतदीया[2] ग्रन्था एव च मन्वादिभिः परिहार्यत्वेनोक्ताः—

या वेदबाह्याः[3] स्मृतयो याश्च काश्च[4] कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥
(मनुस्मृतौ, १२.९५)

तस्मात्तद्धर्मं प्रति[5] त्रयीबाह्यमेवंजातीयकं प्रामाण्येनाऽनपेक्ष्यं स्यादिति सिद्धम् ।" इति ॥
(तन्त्रवार्तिके, १.३.३-४, पृ० १९४-१९६)

अत्र भट्टोदाहृतं 'या[6] वेदबाह्या' इति वचनं सूतसंहितायां ज्ञानयोगखण्डे[7] चतुर्दशाऽध्याये (१४.१८) ऽन्यत्र च पठ्यते । किञ्च 'शिष्टाकोपेऽविरुद्धमिति चेत्' (जै० सू०, १.३.५) 'न शास्त्रपरिमाणत्वात्' (जै० सू० १.३.६) इत्येतदपि अत्रैव चोद्योत्तरत्वेन[8] व्याख्यातम् । यदाहुर्भट्टाः—

"यर्त्तहि वेदविहितं न बाधते शिष्टान्[9] वा वेदविदो न कोपयति[10] । विहारारामभण्डलवैराग्य[11]-ध्यानाभ्यासाऽहिंसासत्यवचनदमदानदयादि, तद् बुद्धादिभाषितं प्रामाण्येनाऽविरुद्धमिति चेत्, न । शास्त्रपरिमाणत्वात् । परिमितान्येव हि चतुर्दशाऽष्टादश वा विद्यास्थानानि धर्मप्रमाणत्वेन शिष्टैः

---

१. रानुमान B
२. तदीया A
३. वेदवाक्यस्मृतयो A
४. काश्चित् A
५. तस्माद्धर्मं प्रति B, तस्मात्तद्धर्मंमपि A
६. B omits या
७. A omits खण्डे
८. चोद्योंतरत्वेन B
९. शिष्टा B
१०. कोपयन्ति A
११. वैराग्या B

परिगृहीतानि वेदोपवेदाङ्गोपाङ्गाऽष्टादशधर्मसंहितापुराणशास्त्रशिक्षादण्डनीतिसञ्ज्ञकानि, न च[1] तेषां मध्ये बौद्धार्हतादिग्रन्थाः स्मृता गृहीता वा ।

प्रतिकञ्चुक[2]-रूपेण पूर्वशास्त्रार्थगोचरम् ।
यदन्यत् क्रियते तस्य धर्मं प्रत्यप्रमाणता ॥

तथा च प्रायश्चित्तादि[3]-दानकाले यो[4] वाक्यमात्मीयमन्यकविकृतं वा श्लोकं सूत्रं[5] वोच्चार्य मन्वादिसंवादिप्रायश्चित्तं दद्यात्, न कश्चिदपि धर्मार्थं प्रतिपद्येत[6] ।

... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ...

यथै[7]वाऽन्यायविज्ञाताद्वेदाल्लेख्यादिपूर्वकात् ।
शूद्रेणाऽधिगताच्चापि[8] धर्मज्ञानं न सम्मतम् ॥
तथाऽतिक्रान्तवेदोक्तमर्यादाव्यवहारिणाम् ।
संवादिष्वपि वाक्येषु नेष्यते[9] धर्महेतुता[10] ॥
स्मर्यन्ते च पुराणेषु धर्मविप्लुतिहेतवः ।
कलौ शाक्यादयस्तेषां को वाक्यं श्रोतुमर्हति ॥
यथा कृतककर्पूरसुवर्णादिषु दीयते[11] ।
यद् बीजं तदपि व्यक्तमग्राह्यत्वात् प्रलीयते[12] ॥

---

१. व B
२. प्रातिस्विक A
३. प्रायश्चितादि A B
४. प्रो B
५. श्लोकसूत्रं A
६. प्रतिपद्यते A B
७. यथौ B
८. शूद्रेण विगताच्चापि A B
९. नेष्टते B
१०. धर्महेतुना A B
११. सुवर्णादिप्रतीयते A
१२. प्रतीयते A

तेन कर्मानुरूप्य[१]-सामान्यतो दृष्टार्थापत्तिबलात् तदभिप्रायकल्पितकर्माभासमध्यपतितं सन्मूलमप्यहिंसादिश्च दृति[२]-प्रक्षिप्तगोक्षीरवदनुपभोग्य[३]-मविस्रम्भणीयं तत्तन्मात्रोपलब्धं भवतीत्यवश्यं यावत्परिगणितधर्मशास्त्रेभ्यो नोपलभ्यते तावदग्राह्यं भवेत् ।

यदा शास्त्रान्तरेणैव सोऽर्थः स्पष्टोऽवधार्यते ।
तदा तेनैव सिद्धत्वादितरत्स्यादनर्थकम् ॥

तस्माद् यावत्[४] परिगणितवेदादिशास्त्रव्यतिरिक्तनिबन्धनं तद्धर्मप्रमाणत्वेन नापेक्षितव्यम्[५] इति ।"

(तन्त्रवार्तिके, १.३.७)

'एत एव च ते' इति भट्टवार्तिकेन कौर्मयाज्ञवल्क्यादि-वचनानामर्थ उपनिबद्धः । उक्तं हि कौर्म उपरिभागे पञ्चदशेऽध्याये —

'पाखण्डिनो विकर्मस्थान् धर्माचार्यांस् तथैव च ।[६]
पाञ्चरात्रान् पाशुपतान् वाङ्मात्रेणाऽपि नाऽर्चयेत् ।.'[७]

तत्रैव एकोनविंशेऽध्याये—

'बौद्धश्रावकनिर्ग्रन्थाः पाञ्चरात्रविदो जनाः ।
कापालिकाः पाशुपताः पाखण्डा ये च तद्विधाः ॥'

इत्यनेन पूर्वोदाहृतहेमाद्रिश्राद्धकाण्डस्थ[८]-ब्रह्मवैवर्तीयनग्नादि-निरूपणप्रघट्टकप्रविष्टवचनैश्चोक्तं पाञ्चरात्रादीनां पाषण्डत्वं[८] 'पाषण्डाश्चैत[९] एव हि' इति भट्टवार्तिकांशेनोपनिबद्धम् । एतेन —

---

१. रूपस्य B
२. श्वदृति A
३. वदनुभोग्य B
४. A omits तस्माद् यावत्
५. प्रमाणत्वेनापेक्षितव्यम् B, प्रमाणत्वेनानपेक्षितव्यम् A
६. Printed text of *Kūrmapurāṇa* reads वामाचारांस् in place of धर्माचार्यांस्
७. B adds ना
८. पाखण्डत्वं A
९. पाखण्डाश्चैत A

'पाखण्डिनो विकर्मस्थान् वैडालव्रतिका'न्छठान्[२] ।
हैतुकान्[३] वकवृत्तींश्च वाङ्मात्रेणाऽपि नार्च्चयेत् ॥'

(मनुस्मृतौ, ४.३०)

इति **मानवस्य** 'दम्भिहेतुकपाखण्डिवकवृत्तींश्च वर्जयेत्' (याज्ञवल्क्यस्मृतौ, १.१.३०) इति **याज्ञवल्कीयस्य** चार्थ उपनिबद्धः[४] । 'स्मर्यन्ते च पुराणेषु' इति भट्टवार्तिकेन तु पूर्वोदाहृतं कौर्मैकादशाध्यायस्थं 'कापालं पाञ्चरात्रं च' इत्यादिवचनम् । तथा पूर्वार्द्धे सप्तविंशाऽध्याये—

'वामाः पाशुपताचारास्तथा वै पाञ्चरात्रकाः ।
भविष्यन्ति कलौ तस्मिन् ब्राह्मणाः क्षत्रियास्तथा ॥'

(कूर्म०, ३०.२५)

इति वचनं पूर्वोदाहृतमेव वासिष्ठलैङ्ग[५]-नवमाऽध्यायस्थं 'पाञ्चरात्रं प्रशंसन्ति' इत्यादिवचनम् । अन्यानि चैवंजातीयकानि वचनान्युपनिबद्धानीति दिक् । तथा पराशरपुराणे दशमेऽध्याये—

'धर्माऽधर्मादि[६]-विज्ञाने त्वागमाः पुरुषोदिताः ।
पाञ्चरात्रादयः सर्वे न प्रमाणमिति स्थितिः ॥'

(पराशरोपपुराणे, १०.६७)

**मुक्तिखण्डे** षष्ठेऽध्याये—

'अथातः सम्प्रवक्ष्यामि ज्ञानाऽनुत्पत्तिकारणम्'

(सूतसंहितायाम्, मुक्तिखण्डे, ६.१)

इत्युपक्रम्य—

'वेदाज्ञानाञ्च विद्वेषः स्मृतीनाञ्च तथैव च ।
पुराणानाञ्च विद्वेषो भारतस्य तथैव च ॥

---

१. प्रतिकान् B
२. व्रतिकांस्तथा A
३. हेतुकान् B
४. निबद्धं B
५. लैग B
६. धर्मादि B

तेषामध्येतृविद्वेषस्तेषां वाधश्च केशव ।
तेषामर्थाऽपहारश्च[1] ज्ञानाऽनुत्पत्तिकारणम् ।।
वामपाशुपतादीनां शाक्यादीनां परिग्रहः ।
पाञ्चरात्राश्च यश्चाऽपि ज्ञानाऽनुत्पत्तिकारणम् ।।[2]
शिष्टानामसहारोपः शिष्टसंसर्गवर्जनम् ।
अनिष्टता च मद्भक्तेर्ज्ञानाऽनुत्पत्तिकारणम् ।।'
(सूतसंहितायाम्, मुक्तिखण्डे, ६.१०-१३)

इत्यादि । तस्मात् कौर्म-वासिष्ठलैङ्ग-ब्रह्मवैवर्त-पराशरपुराणादीनां पूर्वमीमांसायां[3] हेमाद्रि-माधवादिनिबन्धानाञ्च पर्यालोचनया पाञ्चरात्रादीनामप्रामाण्यमिव लक्ष्यते, इति चेत् । अत्रोच्यते—अस्ति तावदमीषां प्रामाण्यम्—

'सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः ।।'[4]

इति भारतोक्तेः । न चैवं प्रागुक्तकौर्मादिवचनं[5]—विरोधः । वैदिकं प्रत्यननुष्ठापकत्वे[6] तेषां तात्पर्यात् । उक्तञ्च मुक्तिखण्डे चतुर्थाध्याये—

'तथापि योंऽशो मार्गाणां वेदेन न विरुध्यते ।
सोंऽशः प्रमाणमित्युक्तं केषाञ्चिदधिकारिणाम् ।।
(सूतसंहितायाम्, मुक्तिखण्डे, ४.१६-१७)

इति । वेदाऽविरुद्धेंऽशे प्रामाण्यं किं न स्यादित्याशङ्क्य तद् भवत्येवाऽधिकारिविशेषं प्रतीत्याह तथापीति[7] माधवः । यज्ञवैभवखण्डे द्वात्रिंशेऽध्याये सूत उवाच —

---

१. पराधश्च B
२. B omits this verse
३. B omits पूर्वमीमांसायां
४. श्लोकोऽयं महाभारतस्य शान्तिपर्वाणि पाठभेदरूपेणोपलभ्यते, द्रष्टव्यम्-महाभारतस्य पुणेसंस्करणम्)
५. वचनं B
६. प्रत्यनुष्ठापकत्वे B
७. तथापि तीति A, तथापीतीति B

'अथातः सम्प्रवक्ष्यामि मार्गप्रामाण्यनिर्णयम् ।
श्रद्धया सहिता[1] यूयं शृणुध्वं मुनिसत्तमाः[2] ॥
वेदांश्च धर्मशास्त्राणि पुराणं भारतं तथा ।
वेदाङ्गान्युपवेदांश्च कामिकाद्यागमानपि ॥
कापालं नाकुलं[3] चैव तयोर्भेदान्[4] द्विजर्षभाः ।
तथा पाशुपतं सौमं[5] भैरव[6]—प्रमुखागमान्[7] ॥
तेषामेवोपभेदांश्च शतशोऽथ सहस्रशः ।
विष्ण्वागमांस्तथा[8] ब्राह्मान् बुद्धार्हाद्यागमानपि ॥
लोकायतं तर्कशास्त्रं बहुविस्तारसंयुतम् ।
मीमांसामतिगम्भीरां सांख्ययोगौ[9] तथैव च ॥
मुनयश्च मनुष्याश्च यथाभाग्यं[10] द्विजोत्तमाः ।
तान्येव विस्तरेणैव सङ्ग्रहेणैव वा पुनः ॥
कुर्वन्ति तानि नामानि कथितानि महर्षिभिः ।
अधिकारिविभेदेन[11] नैकस्यैव सदा द्विजाः ॥
तर्कैरेते हि मार्गास्तु न हन्तव्या मनीषिभिः ।'

(सूतसंहितायाम्, यज्ञवैभवखण्डे, २२.१-५, ८-९)

इत्यादि । अधिकारीति[12]—'उदिते जुहोति' 'अनुदिते जुहोति' इत्यादिश्रुतीनामिवाधिकारिभेदेन[13] प्रामाण्यात् । शुष्कतर्कैरेते मार्गा न बाध्या[14] इत्यर्थ इति माधवः । अत एव मानवपुराणे आगमानुपक्रम्य 'अधिकारिविशेषेण प्रवृत्ता न हि संशय' इत्युक्तम् । भागवतेऽपि दशमस्कन्धे चत्वारिंशेऽध्याये अक्रूरस्तोत्रे —'त्रय्या च विद्यया केचिद्' इत्युपक्रम्य—

---

१. सहितं A
२. पुङ्गवाः A
३. जाकुलं B
४. भेदाद् B
५. सोमं B
६. भैरवं B
७. प्रमुखागमम् A
८. विष्ण्वागमान् तथा B
९. सांख्ययोगस् B
१०. यथाभागं B
११. अधिकारिविशेषेण A
१२. नाधिकारीति A
१३. श्रुतीनाम्मेवाधिकारिभेदेन B
१४. वादयन् B

'त्वामेवाऽन्ये शिवोक्तेन मार्गेण शिवरूपिणम् ।
बह्वाचार्यविभेदेन भगवन् समुपासते ॥'
(भागवते, १०.४०.८)

इत्यादिना अधिकारिभेदेनैव प्रामाण्यं विभावितम् । **विरोधाधिकरणशिष्टाकोपाधिकरणयो**रपि वैदिकान् प्रत्यननुष्ठापकत्वे[1] तात्पर्यम् । अत एवोक्तं **भट्टैः** 'त्रयीविद्भिर्न परिगृहीतानि' इति **शिष्टाकोपे** श्रुत्यविरुद्धानाम्[2] उदाहरणतया तत्रार्थबाधस्याऽसम्भावितत्वेनाऽननुष्ठापकताया[3] एव वक्तव्यत्वाच्च । दृश्यते ह्यष्टदोषोपवर्णनकाले व्रीहिशास्त्रं पक्षे[4] प्रमाणमिति तान्त्रिकाणां व्यवहारः । तद्विषयीभूतश्च विकल्पः क्वचिदैच्छिकः : प्रकृते तूक्तवचनबलाद् व्यवस्थित इत्यन्यदेतत् । अत एव **पार्थसारथि**रपि—

'यावदेकं श्रुतौ कर्म स्मृतौ वाऽन्यत्प्रतीयते ।
तावत्तयोर्विरुद्धत्वे श्रौताऽनुष्ठानमिष्यते ॥'
(तन्त्रवार्तिके, १.३.४, पृ० १९४)

इति वार्तिकम्[5] उदाहृत्य 'तेन फलतोऽप्रामाण्यं श्रुतिविरुद्धानां स्मृतीनाम्' (शास्त्रदीपिकायाम्, १.३.३) इत्युपसंहृत्य 'भाष्यमप्यननुष्ठानरूपाऽप्रामाण्यपरं व्याख्येयम्' (तत्रैव) इत्याह । अत एवोत्तरतन्त्रे[6] आगमानामविरुद्धेंऽशे प्रामाण्यं स्वीकृतम् । अविरोधलक्षणे स्थितम् **'उत्पत्त्यसम्भवात्'** (ब्रह्म०, २.२.४२) ।

''भागवतमतमिदानीं निराक्रियते । ते हीत्थं मन्यन्ते - भगवानेवैको वासुदेवो[7] निरञ्जनज्ञानस्वरूपपरमार्थतत्त्वम्[8], स चतुर्धाऽऽत्मानं प्रविभज्य प्रतिष्ठितो वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धभेदात् । तत्र वासुदेवो नाम परमात्मोच्यते, सङ्कर्षणो नाम जीवः, प्रद्युम्नो नाम मनः, अनिरुद्धो नामाऽहङ्कारः । तेषां वासुदेवः परा प्रकृतिः, इतरे सङ्कर्षणादयः कार्यम् । तमित्थम्भूतं भगवन्तमिष्ट्वा भगवन्तमेव प्रतिपद्यत इति । तत्र वासुदेवो भगवान् परमार्थतत्त्वमित्यादि न निवारयामः । किन्तु सङ्कर्षण उत्पद्यत इति । सङ्कर्षणो जीव ईश्वरो वा । नाद्यः,

---

१. प्रत्यानुष्ठापकत्वे B
२. श्रुत्यविरोधानाम् A
३. (अ) नुष्ठापकताया A
४. पक्षं A
५. वाक्यम् B
६. मन्त्रे B
७. वासुदेवे B
८. परमार्थत्वं B

तस्योत्पत्तिसत्त्वे कृतहाना[1]ऽकृताभ्यागम[2]प्रसङ्गात् । अनित्यत्वेन मोक्षाऽनन्वयापत्तेश्च । 'नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः' (ब्र० सू०, २.३.१७) इत्यत्र जीवोत्पत्तेर्निराकरिष्यमाणत्वाच्च । 'न च कर्तुः करणम्' (ब्र० सू०, २.२.४३)—भागवता[3] हि कर्तु[4]-र्जीवात् सङ्कर्षणसञ्ज्ञकात् करणं मनः प्रद्युम्नसञ्ज्ञकम् उत्पद्यते, तस्माच्चाऽनिरुद्धसञ्ज्ञकोऽहङ्कार उत्पद्यत इति वदन्ति । छिदा[5]-कर्तुर्देवदत्तात् परश्वादेः करणस्योत्पत्त्यदर्शनात् । यद्यपि अनेकशिल्पनिपुणः परशुं कृत्वा तेनच्छिनत्त्येव, तथापि सङ्कर्षणोऽकरणः कथं प्रद्युम्नाख्य[6]करणं कुर्यात् । अकरणस्य वा करणसामर्थ्ये कृतं करणनिर्माणेन । न चैवं भूतां श्रुतिमुपलभामहे । तस्मादसङ्गतमेतत् । अस्तु तर्हि सङ्कर्षण ईश्वर इति द्वितीयः पक्षस्तत्राह —'विज्ञानादिभावे तदप्रतिषेधः' (ब्र० सू०, २.२.४४) । सर्वज्ञानैश्वर्यशक्तिबलतेजोभिरैश्वर्यधर्मैरन्विता सङ्कर्षणादयो वासुदेवा एवेत्यभ्युपगमे तदप्रतिषेधः । उत्पत्त्यसम्भवस्याऽप्रतिषेधः दोषतादवस्थ्यमित्यर्थः । ईश्वरस्याऽप्यनादित्वात् । किञ्च यदीमे परस्परभिन्नास्तर्हि नेश्वराः, परस्परव्याघातप्रसङ्गात् । सिद्धान्त[7]-हानिश्च, भगवानेवैको वासुदेवः परमार्थतत्त्वमित्यभ्युपगमात् । न हि पाञ्चरात्रसिद्धान्तिभिर्वासुदेवादिषु कश्चिद् भेदोऽभ्युपगम्यते । 'विप्रतिषेधाच्च' (ब्र० सू० २.२.४५)—अभेदे गुणगुणिभावो गुणानां बहुत्वं तदभिन्नस्य गुणिनश्चैकत्वमित्यादिर्विप्रतिषेधो ह्यस्मिन्[8] शास्त्रे बहुविध उपलभ्यते । वेदप्रतिषेधश्च भवति । 'चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधीतवान्' इत्यादिवेदनिन्दादर्शनात् तस्मादसङ्गतैषा कल्पनेति ।" (ब्र० सू०, शां०, भा० २.२.८.४२-४५)

'एतेन योगः प्रत्युक्तः' (ब्र० सू०, २.१.३) इति सूत्रे भाष्यम् —"येन त्वंशेन न विरुद्ध्यते तेनेष्टमेव सांख्ययोग[9]-स्मृत्योः सावकाशत्वम् । तद्यथा-'असङ्गो ह्ययं पुरुषः' इत्येवमादिश्रुतिप्रसिद्धमेव । पुरुषस्य विशुद्धत्वं निर्गुणपुरुषनिरूपणेन सांख्यैरनुगम्यते[10] । तथा योगैरपि, 'अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः' इत्येवमादिश्रुतिप्रसिद्धमेव निवृत्तिनिष्ठत्वं प्रव्रज्याद्युपदेशेनाऽनुगम्यते[11] । एतेन सर्वाणि तर्कस्मरणानि प्रतिवक्तव्यानि । तान्यपि तर्कोपपत्तिभ्यां तत्त्वज्ञानायोप-

---

१. कृतहानौ A
२. कृताभ्यागम A
३. भोगवता A
४. कर्तु B
५. भिदा A
६. प्रद्युम्नाद्यकरणं A
७. सिद्धता A
८. यस्मिन् B
९. योगो B
१०. रनुपगम्यते B
११. ऽनुपगम्यते B

कुर्वन्तीति चेत्, उपकुर्वन्तु । तत्त्वज्ञानं तु वेदान्तेभ्य एव भवति, 'नावेदविन्मनुते तं बृहन्तम्', 'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्येवमादिश्रुतिभ्यः ।" (ब्र० सू० शां० भा, २.१.३)

इत्येतत्पर्यालोचनया स्वांऽविरुद्धांशस्य ग्राह्यत्वं प्रतीयते । अत एव शाण्डिल्यं प्रति—

तस्मात्त्वं पाञ्चरात्रोक्तवर्त्मना श्रद्धया सह ।
मामाराधय शाण्डिल्य ब्राह्मणानपि भक्तितः ॥'

इति विधिरपि सङ्गच्छते । स्मर्यते हि वासिष्ठलैङ्गेऽष्टमेऽध्याये—

'एवं वर्णाश्रमाचारो[१] मया प्रोक्तः समासतः ।
श्रद्धया मत्प्रसादार्थमाचरन्ति[२] जनाश्च ये ।
तेषां नाऽस्ति महाघोरे नरके वर्तनं[३] मुने ।
वर्णाश्रमसमाचारात् सर्वे संसारवर्तिनः[४] ॥
ज्ञानं मद्विषयं लब्ध्वा यान्ति मत्परमं वपुः ।
वर्णाश्रमसमाचारं विना वेदविदां वर ॥[५]
वाञ्छन्ति मोक्षं ये मूढास्तेषां नास्त्येव निष्कृतिः ।
पुरा शाण्डिल्यसञ्ज्ञस्तु ब्राह्मणः कश्चिदल्पवित् ॥
वेदवादं परित्यज्य साहसी बुद्धिपूर्वकम् ।
परदारान् सदा गत्वा कृत्वा पापानि सन्ततम् ॥
वासुदेवं कुमार्गेण पूजयामास सुव्रत ।
ततो विश्वात्मको विष्णुः प्रादुरासीत् स्वमायया ॥
तस्याऽग्रे सोऽपि तं दृष्ट्वा पूजां चक्रे पुनः पुनः ।
ततो मायी हरिर्ब्रह्मन् शाण्डिल्यं प्रत्यभाषत[७] ॥
धिग्धिक्[८] शाण्डिल्य दुर्बुद्धे साहसी त्वमहो भृशम् ।
को वा वर्णाश्रमाचारं श्रौतं त्यक्तुं[९] त्वया विना ॥

---

१. स्व B
२. वर्णाश्रमाचारो B
३. चरन्ती B
४. वर्णनं A
५. संसारचारिणः A
६. A omits this verse.
७. प्रत्यभाषता A
८. धिग्धिग् B
९. त्यक्तं B

शक्तः पापबलात् कर्तु[1] नाऽस्ति ते निष्कृतिः श्रुतौ ।
कुमार्गेणाऽपि शाण्डिल्य कृता पूजा मम त्वया ।।
कालेन[2] महता तस्माद् वेदमार्गं गमिष्यसि ।
तस्मात् त्वं पाञ्चरात्रोक्तवर्त्मना श्रद्धया सह ।।
मामाराधय शाण्डिल्य ब्राह्मणानपि भक्तितः ।
इत्युक्त्वा भगवान् विष्णुस्तत्रैवान्तरधीयत ।।
शाण्डिल्योऽपि पुनर्ब्रह्मन् पाञ्चरात्रं तु वैष्णवम् ।
परिगृह्य महाविष्णुं पूजयामास भक्तितः ।।
पुनर्विष्णोः प्रसादेन वेदमार्गातिवर्तिनीम् ।
शाण्डिल्यसंहितां चक्रे वैष्णवीं महतीं मुने ।।
तस्यां चक्रुर्मुने दीक्षां पाखण्डाः पापयोनयः ।
स्थापितायान्तु शाण्डिल्यः संहितायां[3] ममार ह ।।
पुनर्दंष्ट्राकरालास्याः क्रुद्धाः पाशधरा मुने ।
शूलहस्ता महाक्रूरनयनाः[4] कृष्णविग्रहाः ।।
निर्घृणाः सततं ब्रह्मन् यमदूता भयङ्कराः ।
बद्धाः[5] (?) पाशेन शाण्डिल्यं मार्गे दुष्कण्टके मुने ।।
अधोमुखोर्ध्वपादं[6] तं सहसा कृष्णमुद्गरैः ।
पीड्यान्धकूपे निक्षिप्य यमराजस्य सन्निधौ ।।
विधाय पीडां पादैस्ते पश्येत्यूचुर्यमं प्रति ।
सोऽपि तं प्रेक्ष्य दुर्बुद्धिं यमराजो भयङ्करः ।।
प्राहैतान् तीक्ष्णया[7] वाचा पीड्यन्तां[8] मम सन्निधौ ।
इत्युक्ते यमराजेन शाण्डिल्यं यमकिङ्कराः ।।
मुद्गरैः खड्गशूलाद्यैः पीडां चक्रुर्भृशं पुनः ।
पुनश्चाह यमः क्रुद्धो रक्तघूर्णितलोचनः ।।

---

१. पापबलात्यक्तुर् B
२. B adds अतः
३. शाण्डिल्यसंहितायां A
४. नयनां B
५. बद्धा B
६. अधोमुखार्द्धपातं B, अधोमुखोर्ध्वपादन्तं A
७. प्राहस्सतीक्ष्याया B
८. पीड्यतां B

इष्टानामप्यनिष्टानां सा[1]धनं मातृवत्सदा ।
प्राप्तये परिहाराय बोधयन्ती श्रुतिर्यतः ॥
बुद्धिपूर्वं परित्यक्ताऽनेन साक्षाद् दुरात्मना ।
तस्मादेनं[2] तु पापिष्ठं तत्पापविनिवृत्तये ॥
रौरवादिषु सर्वेषु नरकेषु क्रमेण तु ।
भोजयित्वा महादुःखान्यप्रसह्यान्यनेकशः[3] ॥
आगच्छध्वं[4] सहाऽनेन शाण्डिल्येन दुरात्मना ।
इति संचोदिता ब्रह्मन् यमदूता यमेन तु ॥
तथैव चक्रुः पापिष्ठमब्दानामयुतं तदा[5] ।
पुनश्चैनं समादाय यमदूता यमं ययुः ॥
तं दृष्ट्वा यमराजोऽपि प्राह गम्भीरया गिरा ।
भद्राभद्रं त्वया भुक्तं कल्याणाऽत्तीव दुःसहम् ॥
पापानां फलमाश्चर्यं गच्छ विष्णोः पुरं सुखम् ।
इत्युक्तो यमराजेन शाण्डिल्यो रथमास्थितः ।
स्वस्तिमङ्गलसंयुक्तः सुखं विष्णुपुरं गतः ॥
दृष्ट्वा शाण्डिल्यमनघं विष्णुर्भक्तहिते रतः ।
प्रसादमकरोदस्य पुनरेनमभाषत ॥
वेदमार्गपरित्यागफलं भुक्तं त्वयाऽनघ ।
मत्तन्त्राश्रयणेनैव मत्पूजा च कृता त्वया ॥
तयाऽहं[6] प्रीतवानस्मि[7] तत्र शाण्डिल्य मे प्रिय ।
भूयोऽपि मत्प्रसादेन कर्मलोके द्विजोत्तम ॥
भूत्वा वर्णाश्रमाचारं श्रौतं कृत्वा यथाबलम् ।
मद्भक्त्याऽ[8]तीवसंयुक्तो मदाराधनतत्परः ॥

---

१. B omits 'साधनं मातृवत्सदा ।
प्राप्तये परिहाराय बोधयन्ती श्रुतिर्यतः ॥
'बुद्धिपूर्वं परित्यक्ताऽनेन'
२. तस्मादिमं A
३. महादखान्यप्रसाह्यन्यनेकशः B
४. अगच्छध्वं B
५. सदा B
६. तथाऽहं B
७. प्रीतयानस्मि B
८. मद्भात्त्क्या A, मद्भक्ता B

साक्षाद् ब्रह्मैकविज्ञानं लब्ध्वा चैवाऽमृतो भव[1] ।
इत्युक्तो विष्णुना ब्रह्मन् शाण्डिल्यो भुवि जातवान् ॥
ब्राह्मणानां कुले शुद्धे साक्षादग्निसमो मुने ।
स पुनर्वासुदेवस्य प्रसादेन महामुने ॥
ब्रह्मचर्याश्रमे स्थित्वा वेदान् सम्यगधीतवान् ।
पुनः स्नात्वा गृही भूत्वा शान्तः सत्यपरायणः ॥
अग्नीनाधाय विधिवत् कृत्वा यागाननन्तरम् ।
प्रणष्टपापः[2] शुद्धात्मा ब्रह्मज्ञानी सदा शुचिः ॥
अनित्यमीश्वरादन्यद्[3] इति ज्ञात्वा प्रसादतः ।
विरक्तः सर्वलोकेभ्यस्त्यक्त्वा कर्माणि[4] सर्वतः ॥
आचार्याच्छ्रुतवेदान्तो मत्प्रसादान्महामुने ।
सर्वलोकविधातारं सर्वज्ञं सर्वकारणम् ॥
सत्यबोधसुखानन्तमादिमध्यान्तवर्जितम् ।
अप्रमेयमनौपम्यमनिर्देश्यं शिवाभिधम् ॥
मामपश्यदयत्नेन मुने स्वात्मतया सदा ।
प्रारब्धकर्मप्राबल्यात् प्रपञ्चप्रतिभासने[5] ॥
स मुक्तो[6] भुक्तवान् भोगान् कञ्चित्कालमनावृतः ।
स पुनः कर्मणामन्ते निवृत्तो विश्वमायया ॥
एवं वर्णाश्रमाचाराद् वेदसिद्धादयत्नतः[7] ।
शाण्डिल्योऽपि विमुक्तोऽभूत्तच्छिष्याश्चैवमेव हि ॥
बहवोऽनेन मार्गेण पूता[8] मद्रूपमागताः ।
वेदमार्गं विना ब्रह्मन् नाऽस्त्युपायो विमुक्तये ॥
सर्वाणि चैव शास्त्राणि स्मृतयः संहितास्तथा ।
सूत्राणि चैव वेदाङ्गान्युपवेदास्तथैव च ॥[9]

---

१. B reads this line as साक्षाद् ब्रह्मैकविज्ञानं ज्ञानं लब्ध्वाऽमृतो भव
२. प्रनष्टपापः B
३. अनित्यमीश्वरादन्य B
४. क्वाणि B
५. प्रपञ्चाप्रतिभासने B
६. भुक्तो B
७. वेदसिद्धादियत्नतः A
८. पूज्या A
९. B reads this verse as सर्वशास्त्राणि वेदाङ्गान्युपवेदास्तथैव च

पुराणानि तथा सांख्यं योगः पाशुपतं तथा ।
देशजातिकुलानां धर्माश्चाऽन्ये महत्तराः ॥
सर्वे वेदाऽविरोधेन प्रमाणम्, नाऽन्यथा भवेत् ।
या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फला ज्ञेयाः[1] प्रत्यवायस्य हेतवः ॥
तस्मात् सर्वप्रयत्नेन ब्रह्मब्रह्मविदां वर ।
त्यक्त्वा वेदाविरुद्धानि वेदमेकं समाश्रय ॥
इति परमेश्वरवाक्यमभीष्टं
श्रुतिवचनेन समं हृदि कृत्वा ।
श्रुतिंहृदयं प्रणिपत्य महेशं
श्रुतिमहिमानमवैत्स वसिष्ठः[2] ॥"

इत्यत्र ह्यधिकारिविशेषं प्रति पाञ्चरात्रादीनां प्रामाण्यं स्पष्टमेव लभ्यते । न चाऽत्र 'तस्मात्त्वं पाञ्चरात्रोक्त' इत्यादि - भगवद्वचनेन सर्वान् प्रति प्रामाण्यमेवोक्तम् इति । 'धिग्धिग्' इत्यादिना 'नाऽस्ति ते निष्कृतिः श्रुतौ' इत्यन्तेनाऽन्यतपोनिष्ठतया[3]ऽवधारितया[4] शाण्डिल्यस्यैव 'तस्मात्त्वम्' इत्यत्र युष्मदर्थत्वात् । पाञ्चरात्रादीनामधिकारिविशेषविषयतायां प्रमाणानां प्रागेवाऽस्माभिरुदाहृतत्वात् । अत एवेहाऽपि 'कुमार्गेणाऽपि' इत्युक्त्या,[5] 'वेदमार्गातिर्वर्तिनीम्' इत्युक्त्या, 'तस्यां चक्रुर्मुने दीक्षां पाखण्डाः पापयोनयः' इत्युक्त्या, परलोकात्परावृत्तस्याऽग्निहोत्राद्युपन्यासकाले[6] पाञ्चरात्राऽनुक्त्या च । स्पष्टमेवेदं 'विप्रतिषेधाच्च' (ब्र० सू० २.२.४५) इति सूत्रे । इममेव शाण्डिल्यं स्मारयद्भिराचार्यैरधिकरिभेदेनैव प्रामाण्यं विभावितम् । स्यादेतत्, एवमपि तन्त्रेषु कोऽधिकारी को नेति चेत् ? उच्यते - -

"शापाद् वा गौतमादीनां पापाद् वा महतो नराः ।
ये गता वेदबाह्यत्वं ये च सङ्कीर्णयोनिजाः ॥
तेऽधिक्रियन्ते तन्त्रादौ स्त्रीशूद्राश्च यथायथम् ।"

तथा हि **कौर्मे** चतुर्दशाऽध्याये—

"पुरा दारुवने पुण्ये मुनयो गृहमेधिनः ।
ईश्वराराधनार्थाय तपश्चेरुः सहस्रशः ॥

---

१. किञ्च B
२. वरिष्ठः A
३. इत्यन्तेनाऽन्यतथापिष्टतया B
४. वधारित B
५. कुमार्गेणापीयेत्युक्त्या A
६. ग्निहोत्रान्युपन्यासकाले B

ततः कदाचिन्महती कालयोगेन दुस्तरा ।
अनावृष्टिरतीवोग्रा ह्यासीद् भूतविनाशिनी ॥
समेत्य सर्वे मुनयो गौतमं तपसां निधिम् ।
अयाचन्त क्षुधाविष्टा अशनं प्राणधारणम् ॥
स तेभ्यः प्रददावन्नं मृष्टं बहुतरं बुधः ।
सर्वे बुभुजिरे विप्रा निर्विशङ्केन चेतसा ॥
गते तु द्वादशे वर्षे[1] कल्पान्त इव शङ्करी ।
बभूव वृष्टिर्महती यथापूर्वमभूज्जगत् ॥
ततः सर्वे मुनिवराः समामन्त्र्य परस्परम् ।
महर्षिं गौतमं ब्रूयुर्गच्छाम इति वेगतः ॥
निवारयामास च तान् कञ्चित्कालं यथासुखम् ।
उषित्वा मद्गृहे पश्चाद्[2] गच्छध्वमिति[3] पण्डिताः ॥
ततो मायामयीं सृष्ट्वा[4] कृशां गां सर्व एव ते ।
समीपं प्रापयामासुर्गौतमस्य महात्मनः ॥
सोऽनुवीक्ष्य[5] कृपाविष्टस्तस्याः संरक्षणोत्सुकः ।
गोष्ठे[6] तां बन्धयामास स्पृष्टमात्रा ममार सा ॥
स शोकेनाऽभिसन्तप्तः कार्याकार्यं महामुनिः ।
न पश्यति स्म सहसा तादृशं[7] मुनयोऽब्रुवन् ॥
गोवध्येयं द्विजश्रेष्ठ यावत्तव शरीरगा ।
तावत्तेऽन्नं[8] न[9] भोक्तव्यं[10] गच्छामो वयमेव हि ॥
तेन ते मुदिताः सन्तो[11] देवदारुवनं शुभम् ।
जग्मुः पापवशं नीतास्तपश्चतु[12] यथा पुरा ॥

---

१. वर्षा B
२. वरमं B
३. गच्छन्तु इति A
४. सृष्टा A, स्पृष्ट्वा B
५. सोऽनुवीत्य AB
६. गौष्ठे B
७. तादृशो A
८. तावदन्नं B
९. नं B
१०. भाक्तव्यं B
११. सं वो B
१२. चेरुः A

स तेषां मायया जातां[1] गोवध्यां[2] गौतमो मुनिः ।
केनाऽपि हेतुनाज्ञात्वा शशापातीवकोपनः[3] ॥
भविष्यध्वं त्रयीबाह्या महापातकिभिः सदा ।
बभूवुस्ते महाशापाज् जायमानाः पुनः पुनः[4] ॥
सर्वे सम्प्राप्य[5] देवेशं शङ्करं विष्णुमव्ययम् ।
अस्तुवन् लौकिकैः स्तोत्रैरुच्छिष्टा इव सर्वशः ॥
देवदेवौ महादेवौ भक्तानामार्तिनाशनौ[6] ।
कामवृत्त्या[7] महायोगी शापान्नस्त्रातुमर्हथ ॥
तदा पार्श्वस्थितं विष्णुं सम्प्रेक्ष्य वृषभध्वजः ।
किमेतेषां[8] भवेत् कार्यं प्राह पुण्यैर्पिणामिति[9] ॥
ततः स भगवान् विष्णुः शरण्यो भक्तवत्सलः ।
गोपतिः प्राह विप्रेन्द्रानालोक्य[10] प्रणतान् हरिः ॥
न वेदबाह्ये पुरुषे पुण्यलेशोऽपि शङ्कर ।
सङ्गच्छते महादेव धर्मो वेदाद् विनिर्बभौ ॥
तथापि भक्तवात्सल्याद् रक्षितव्या महेश्वर ।
अस्माभिः सर्व एवेमे[11] गन्तारो नरकानपि ॥
तस्माद्वै वेदबाह्यानां रक्षणार्थाय पापिनाम् ।
विमोहनानि शास्त्राणि करिष्यावो वृषध्वज ॥
एवं सम्बोधितो[12] रुद्रो माधवेन मुरारिणा ।
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ॥

---

१. जात A, जाता B
२. गोवध्यो A
३. कोपितः A
४. B omits पुनः
५. संप्राथ B
६. नाशिनौ A
७. का वा वृत्तिः AB
८. किमेतत् B
९. पुण्यैर्विना A
१०. नालोक AB
११. एवोमे B
१२. स बोधितो A

कापालं लाङ्गलं[1] वामं भैरवं पूर्वपश्चिमम् ।
पाञ्चरात्रं पाशुपतं तथाऽन्यानि सहस्रशः ॥
सृष्ट्वा तानूचतुर्देवौ कुर्वाणाः[2] शास्त्रचोदितम् ।
पतन्तो[3] नरके[4] घोरे बहून् कल्पान् पुनः पुनः ॥
जायन्तो मानुषे लोके क्षीणपुण्य[5]-चयास्ततः ।
ईश्वराराधनबलाद् गच्छध्वं सुकृतां गतिम् ॥
वर्तध्वमप्रमादेन[6] नाऽन्यथा निष्कृतिर्हि वः ।
एवमीश्वरविष्णुभ्यां चोदितास्ते महर्षयः ॥
आदेशं प्रत्यपद्यन्त शिरसाऽसुरविद्विषोः ।
चक्रुस्तेऽन्यानि शास्त्राणि तत्र तत्र रताः पुनः ॥
शिष्यानध्यापयामासुर्दर्शयित्वा फलानि त्विति ।"

(कूर्म, पूर्व, १६.९७-१२४)

अत्र च भ्रष्टानां कथञ्चिद् गतिप्राप्तये आगमाः प्रणीता इत्युक्त्या तेषां भ्रष्टाधिकारित्वम्, भ्रष्टान् प्रति प्रामाण्यञ्च स्पष्टमेव । एवमपि प्ररोचनार्थं 'चतुर्षु वेदेषु परं पुरुषार्थमलभमानः शाण्डिल्य इमां विद्यामधीतवान्' इत्यादिक्रमेण तन्त्राणां वैदिकमार्गादाधिक्यं बहुधा[7] दर्शितम् । 'तत्तात्पर्यानभिज्ञास्तु ततो भ्राम्यन्ति' इत्येतावता 'मोहनानि' इत्युक्तिः स्पष्टतरं चैतदपरार्के ग्रन्थमुख एव, तथा स्कान्देऽपि यज्ञवैभवखण्डे द्वात्रिंशाऽध्याये गौतमशापो दर्शितः: । सूत उवाच—

"अथ वक्ष्ये महादेव श्रद्धाभावस्य कारणम् ।
मनुष्याणां सुरश्रेष्ठाः शृणु तच्छ्रद्धया सह ॥
पुरा कालविपाकेन प्राणिकर्मवशेन च ।
पञ्च सप्त च वर्षाणि न ववर्ष शतक्रतुः ॥
अनावृष्ट्या द्विजा भूमिर्दुर्भिक्षाऽभवदास्तिकाः ।
क्षुत्पीडा च महातीव्रा विजाता[8] सर्वदेहिनाम् ॥

---

१. मुद्गलं A
२. कुर्वाणौ B
३. पततो A
४. निनये B
५. सु क्षीणं पुण्यं B
६. मप्रसादेन A
७. बहु B
८. तिजाता A

मनुष्याश्चा-समाचारा अभवन्नन्नवाञ्छया ।
हत्वा केचिन्मनुष्यांश्च भुक्तवन्तो विमोहिताः ॥
हत्वा केचित् पशून् मोहादजान् केचन मोहिताः[1] ।
तुरङ्गांश्च गजान्[2] केचिद् भुक्तवन्तो यथाबलम् ॥
ब्राह्मणाः केचिदालोड्य विशिष्टा मुनिसत्तमाः ।
गौतमस्याश्रमं पुण्यं ययुः सर्वे महत्तमम् ॥
गौतमस्य तपोयोगात् प्रसादाच्छङ्करस्य च ।
आश्रमस्तस्य विप्रेन्द्राः सुभिक्षस्त्वभवद् भृशम् ॥
ते सम्भूय मुनिश्रेष्ठं गौतमं प्रणिपत्य च ।
प्रोचुः क्लेशेन संयुक्ता[3] द्विजाः कारुणिकं प्रति ॥
वयं क्षुत्पीडिताः सर्वे भगवन् भक्त[4]-वल्लभ ।
केवलं कृपयैवाऽस्मान् रक्ष रक्ष हिते रत[5] ॥
इति विज्ञापितः श्रीमान् महाकारुणिकोत्तमः ।
गौतमः सर्वविप्राणामभयं[6] दत्तवान् मुनिः ॥
पुत्रभार्यादियुक्तानां विप्राणां गौतमो मुनिः ।
ददौ धान्यं धनं वस्त्रं तिलं तैलञ्च गामपि ॥
अन्यानि यानि जन्तूनामिष्टानि सकलानि तु ।
तानि तेषां मुनिः श्रीमान् ददौ कारुणिकोत्तमः ॥
आधिव्याध्यस्त्रशस्त्रादिपीडाश्च विविधा द्विजाः ।
निवारिता मुनीन्द्रेण गौतमेन द्विजन्मना ॥
श्रौतस्मार्तसमाचारा[7] उपदिष्टा द्विजन्मना[8] ।
गौतमेन मुनीन्द्रेण मुनीन्द्राः करुणाबलात् ॥
एवं चिरगते काले गौतमस्य महात्मनः ।
तपसा केवलं भूमिः सुभिक्षा[9]ऽभवदास्तिकाः ॥

---

१. मोहादजांके च विमोहिताः A
२. तुरंगांश्च जनान् B, तुरङ्गनागाजान् A
३. प्रोचुस्ते क्लेशसंयुक्ता A
४. भव B
५. रतः A
६. सर्वविप्रेभ्यो ह्यभयं A
७. समाचार B
८. द्विजन्मनां B
९. भूमिक्षा A

ब्राह्मणैश्च पुनः सर्वैर्गौतमेन सुरक्षितैः ।
विचार्य कार्यं सम्भूय स्वदेशगमनाय वै ॥
गौर्हता गौतमेनेति निर्घृणैः पुरुषाधमैः ।
कृतो मिथ्याभिशापस्तु महामोहवशेन तु ॥
तज्ज्ञात्वा[1] मुनिभिः श्रीमान् गौतमो मुनिसत्तमः ।
महाक्रोधेन संयुक्तः शशाप ब्राह्मणा[2]ऽधमान् ॥

गौतम उवाच

महादेव-स्वरूपे[3] महादेवस्य विग्रहे ।
महादेवस्य भक्तौ च महादेवस्य नाम्नि च ॥
महादेवस्य विज्ञाने महादेव - परिग्रहे ।
महादेवस्य संस्थाने[4] महादेवस्य कीर्तिषु ॥
महादेवाय दाने च महादेवाश्रयेषु च ।
महादेवस्य चोत्कर्षे त्रिपुण्ड्रोद्धूलनादिषु ॥
रुद्राक्षधारणे रुद्रलिङ्गस्यैव तु पूजने ।
रुद्रालयदिदृक्षायां रुद्रयात्रादि[5]-कर्मसु ॥
यद्यत्तु रुद्र[6]-सम्बन्धि तत्र तत्रापि दुर्जनाः ।
भवता[7]मुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः ॥
नित्यकर्माद्यनुष्ठाने तथा काम्यविवर्जने ।
भवतामुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः ॥
दान्तिशान्त्यादिविज्ञानसाधनेषु द्विजाधमाः ।
भवतामुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः ॥
स्वाध्याये च जपे चैव तथा प्रवचनेऽपि च ।
भवतामुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः ॥
नानाविधेषु यज्ञेषु विविधेषु[8] च कर्मसु[9] ।
भवतामुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः ॥

---

१. त ज्ञात्वा B
२. ब्रह्मणा B
३. महादेव A
४. च स्थानि B
५. बाधादि A
६. यद्य तु रुद्र B, यद्यत् रुद्रस्य A
७. भवेताम् A B (in all the verses where this line is repeated)
८. विधेषु B
९. B omits कर्मसु

कृच्छ्रचान्द्रायणादौ च तथा मासोपवासके ।
भवतामुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः ॥
वेदभक्तौ[1] तथास्तिक्ये[2] योगाङ्गेषु[3] यमादिषु[4] ।
भवतामुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः ॥
श्रुतिस्मृतिपुराणोक्तेष्वर्थेषु सकलेषु च ।
भवतामुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः ॥
स्वदारगमने चैव परदारविवर्जने ।
भवतामुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः ॥
विष्ण्वादिदेवताः सर्वा विशिष्टाः शङ्करादिति ।
भ्रान्तिविज्ञानसम्पन्ना[5] भवत ब्राह्मणाधमाः[6] ॥
शंखचक्रगदापद्मदण्डपाशाङ्कुशादिभिः ।
अङ्किताः श्रद्धया यूयं भवत ब्राह्मणाधमाः[7] ॥
निहीनजातिनाम्ना तु[8] रूपेण च तथैव च ।
अङ्किताः श्रद्धया यूयं भवत ब्राह्मणाधमाः[9] ॥
वर्तुलाश्वात्थपत्रार्ध[10]चन्द्रदीपादिलिङ्गिनः ।
भवत[11] श्रद्धया सार्द्धं ललाटे ब्राह्मणाधमाः ॥
पितृमातृसुतभ्रातृभार्याविक्रयिणः सदा ।
बन्धुविक्रयिणस्तद्वद्[12] भवत[13] ब्राह्मणाधमाः ॥

---

१. वेदभक्ते A B
२. तथा स्निग्धे A
३. योगेषु A
४. आगमादिषु A
५. संयत्ता A, संपत्ता B
६. A B repeat भवेतामुन्मुखा in place of भवत ब्राह्मणाधमाः ।
७. A B repeat भवे०
८. निहीनजातिना भ्रातृरूपेण A
९. A B repeat भवे०
१०. पत्राधं A
११. भवेन A, भवे B
१२. बन्धुविक्रयिणस्तथा B
१३. भवेत A B

वेदविक्रयिणस्तद्वत् तीर्थविक्रयिणस्तथा ।[1]
धर्मविक्रयिणस्तद्वद् भवत ब्राह्मणाधमाः[2] ॥
सुराविक्रयिणस्तद्वन्मांसविक्रयिणस्तथा ।
मत्स्यविक्रयिणस्तद्वद् भवत[3] ब्राह्मणाधमाः ॥
पाञ्चरात्रे च कापाले तथा कालामुखे[4]ऽपि च ।
शाक्ते च दीक्षिता यूयं भवत[5] ब्राह्मणाधमाः ॥
बौद्धे चाऽर्हन्मते चैव तथा पाशुपतेऽपि च ।
शाम्भवे दीक्षिता यूयं भवत[6] ब्राह्मणाधमाः ॥
पाखण्डेषु तथाऽन्येषु मार्गेष्वश्रौतकेषु च ।
श्रद्धया दीक्षिता यूयं भवत[7] ब्राह्मणाधमाः ॥
युष्माकं वंशजाताश्च सर्वे स्त्रीभिः सह द्विजाः ।
मदुक्तार्थप्रकारेण भवन्तु ब्राह्मणाधमाः ॥
बहुनोक्तेन किं साक्षाच्छिवे संसारमोचिके ।
तत्सम्बन्धिषु सर्वेषु श्रुतिस्मृत्यादिकेषु च ॥
युष्माकं वंशजातानां युष्माकं च तथैव च ।
श्रद्धाभावः सदैवास्तु शापस्तीव्रः कृतो मया ॥

सूत उवाच

एवं मुनीन्द्रेण कृते च शापे
द्विजाधमाश्चापि तदाज्ञयैव[8] ।
तदाऽभवंस्तत्कुलजाश्च सर्वे
स्वभावजो ह्येष मुनेः प्रभावः ॥
श्रद्धाभावस्तेन जातो नराणां
साक्षाद् रुद्रे तस्य धर्मे च विप्राः ।
तस्माद् विद्वांस्तद्विनाशाय साक्षाद्
रुद्रं नित्य पूजयेच्छ्रद्धयैव ॥

---

१. B omits this line
२. B omits भवत ब्राह्मणाधमाः
३. भवेत A B
४. कालमुखे A
५-७. भवेत A B
८. तदार्च्चयैव B

त्रिपुण्ड्रमुद्धूलनमास्तिकोत्तमः
समाचरेन्नित्यमतन्द्रितस्तथा ।
विशेषतः शाङ्करवेदने रतो[1]
भवेदशेष कथितं[2] मयाऽनघाः ॥
(सूतसंहितायाम्, यज्ञवैभवखण्डे, ३२.१-४७)

इत्यध्यायः । तथा पराशरोपपुराणे[3] तृतीयेऽध्याये ब्रह्मशापो दर्शितः —

रुद्राधिक्यमविज्ञाय ब्रह्मनारायणौ पुरा ।
अहं ब्रह्म[4] त्वहं चेति[5] विभ्रान्त्या कुरुतां रणम् ॥
क्रोधेन महता युक्तो ब्रह्मा सर्वजगत्पतिः ।
शशाप विष्णुं[6] गर्भस्थो भव[7] चातिविमोहितः ॥
त्वद्भक्ता ब्राह्मणाः साक्षात्[8] त्रिपुण्ड्रे भस्मगुण्ठने[9] ।
भवेयुर्विमुखा नित्यं वेदसिद्धे विमुक्तिदे ॥
त्रिशूले चतुरस्रे[10] च वेणुपत्रोपमे[11] तथा ।
पुण्ड्रान्तरे रता[12] नित्यं भवेयुस्तान्त्रिका द्विजाः ॥
आयुधैः शंखचक्राद्यैस्त्वदीयैरङ्किता द्विजाः ।
अग्नितप्तैर्महामोहाद्[13] भवेयुश्चांसयोर्द्वयोः ॥
वेदासिद्धेन मार्गेण त्वदीयाराधने द्विजा ।
त्वद्भक्ता विमुखा नित्यं भवेयुः परिमोहिताः ॥

---

१. रतौ AB
२. काथितं B
३. पाराशरोपपुराणे B
४. A omits ब्रह्म
५. A adds तदा
६. विष्णु B
७. भवेच् A
८. साक्षो B
९. कुण्डने B
१०. चतुरस्ते A
११. वेणुपत्रापमे B
१२. रतौ A
१३. मोहा B

त्वदीये पाञ्चरात्रे च तन्त्रे भागवते तथा ।
दीक्षिताश्च द्विजा नित्यं भवेयुर्निर्भया हरे ॥
श्रौतस्मार्तसदाचारे सद्योमुक्तिकरे शुभे ।
त्वद्भक्ता विमुखा नित्यं भवेयुः परिमोहिताः ॥"

(पराशरोपपुराणे, ३.२४-३१)

इति । दधीचिशापोऽपि[1] **सौरपुराणे** सप्तमेऽध्याये दर्शितः —

"एते च ब्राह्मणाः सर्वे ये द्विषन्तो महेश्वरम् ।
भवन्तु वेदबाह्यास्ते तमोपहतचेतसः ॥
पाखण्डाचारनिरतास्सर्वे निरयगामिनः ।
कलौ युगे तु सम्प्राप्ते दरिद्राः शूद्रयाजकाः ॥
सर्वस्मादधिको रुद्रः पशुपाशविमोचनः ।
पराङ्मुखस्तु[2] युष्माकं माभूत् पारित्रिकी गति ॥"

(सौरपुराणे, ७.३८-४०)

इत्यादिना । तथा कौर्मे सप्तविंशेऽध्याये—

"तिष्ये मायामसूयाञ्च वधं[3] चैव तपस्विनाम् ।
साधयन्ति नरा नित्यं तपसा ह्याकुलीकृताः ॥"

इत्युपक्रम्य

"यतयश्च भविष्यन्ति शतशोऽथ सहस्रशः ।
नाशयन्ति ह्यधीतानि नाऽधिगच्छन्ति चाऽनघ[4] ।
गायन्ति लौकिकैर्गानैर्दैवतानि[5] नराधिप ॥
वामपाशुपताचारास्तथा वै पाञ्चरात्रकाः ।
भविष्यन्ति कलौ तस्मिन् ब्राह्मणाः क्षत्रियास्तथा ॥
ज्ञानकर्मण्युपरते लोके निष्क्रियतां गते ।
कीटमूषकसर्पाश्च धर्षयिष्यन्ति मानवान् ॥

---

१. दधीचिशापे B
२. पराङ्मुखोऽस्तु A
३. बन्धे B
४. वानघ A
५. दैवतानि B

कुर्वन्ति चावताराणि ब्राह्मणानां कुलेषु वै[1] ।
दधीचिशापनिर्दग्धाः पुरा दक्षाऽध्वरे द्विजाः[2] ॥
निन्दन्ति च महादेवं तमसाविष्टचेतसः ।
वृथा धर्मं चरिष्यन्ति कलौ तस्मिन् युगान्तिमे ॥
ये[3] चाऽन्ये शापनिर्दग्धा गौतमस्य महात्मनः ।
सर्वे ते च भविष्यन्ति ब्राह्मणाद्यासु जातिषु ॥
विनिन्दन्ति महादेवं ब्राह्मणा ब्रह्मवादिनः ।
वेदबाह्यव्रताचारा दुराचारा वृथाश्रमाः ॥
मोहयन्ति जनान् सर्वान्[4] दर्शयित्वा फलानि तु ।
तमसाविष्टमनसो वैडालव्रतिकाधमाः ॥"

(कूर्म०, पूर्व०, ३०.१, २३-३२)

इति । तथा पापविशेषस्याऽपि तन्त्रमार्गप्रवेशप्रयोजकत्वं पाराशरे एकादशाऽध्याये दर्शितम्[5]—

"शंखचक्रगदापद्मवज्रपाशांकुशादिभिः ।
अङ्किताश्च भविष्यन्ति मनुष्याः पापकर्मणा ॥
त्यजन्ति धर्मं वेदोक्तं तथा स्मृतिपुराणगम् ।
वेदाङ्गानि च मोहेन मनुष्याः पापकर्मणा[6] ॥
पाञ्चरात्रे च कापाले पाखण्डेष्वपरेषु च ।
दीक्षिताश्च भविष्यन्ति मनुष्याः पापकर्मणा[7] ॥"

(पराशरोपपुराणे, ११.११, १३-१४)

**साम्बपुराणे—**

"श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते(ऽ) भयं गतः ।
क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तन्त्रमाश्रयेत्[8] ॥
धर्मशास्त्रे पुराणे च प्रोक्तं हि मरणान्तिकम् ।
प्रायश्चित्तं मनुष्याणां पापिष्ठानां सुदारुणम् ॥

---

१. च B
२. द्वेजाः B
३. थे B
४. जना नित्यं B
५. दर्शित B
६. A reads म० and B मनु० in place of मनुष्याः पापकर्मणा
७. मनु० AB in place of मनुष्याः पापकर्मणा
८. तन्त्रमाश्रितान् B

भयं दुर्बलचित्तानां मरणाज्जायते भृशम् ।
तेषामेवाऽभिरक्षार्थं खल्वहं[1] तन्त्रमुक्तवान् ॥"

इति । तथा तत्रैव—

"पाञ्चरात्रं भागवतं तन्त्रं वैखानसाभिधम् ।
वेदभ्रष्टान् समुद्दिश्य कमलापतिरुक्तवान् ॥

इति ।[2] मुक्तिखण्डे चतुर्थेऽध्याये

"अत्यन्तस्खलितानां हि द्विजानां वेदमार्गतः ।
पाञ्चरात्रादयो मार्गाः कालेनैवोपकारकाः ॥"
(सूतसंहितायाम्, मुक्तिखण्डे, ४.१७, १८)

इति । पाञ्चरात्रादीनां न श्रुतिपुराणसाम्यं किन्तु पतितादीन् प्रत्येवाऽनुष्ठापकत्वम्, कालविलम्बेन कथञ्चिदुपकारकत्वञ्चेति तस्मिन्नेव प्रघट्टके माधवः । यज्ञवैभवखण्डे पञ्चचत्वारिंशेऽध्याये आगमानुपक्रम्य—

"अधिकारिविशेषेण क्रमेणैव विमुक्तये ।
प्रवर्तन्ते मुनिश्रेष्ठाः सत्यमेव मयोदितम् ॥
तत्तत्तन्त्रेषु ये[3] मर्त्या दीक्षिता मुनिसत्तमाः ।
सोंऽशस्तैरेव संग्राह्यः सर्वथा नैव वैदिकैः ॥"
(सूतसंहितायाम्, यज्ञवैभवखण्डे, ४५, ५६, ५७)

इति । तथा सूतसंहितायामेव चरमेऽध्याये—

"अथ परशिवभक्त्या सच्चिदानन्दपूर्णं
परशिवमनुभूय स्वात्मरूपेण सूतः ।
मुनिगणमवलोक्य प्राह साक्षाद् घृणाब्धिः[4]
जनपदहितरूपं[5] वेदितव्यं तु किञ्चित्[6] ॥

---

१. ख च हं B
२. A omits तथा तत्रैव—"पाञ्चरात्रं……. …रुक्तवान्" इति ।
३. यो B
४. साक्षाध्वनाब्धिर् B
५. जनयदहितरूपं A
६. केचित् B

श्रुतिरपि मनुजानां वर्णधर्मं बभाषे
परगुरुरखिलेशः[1] प्राह तन्त्रेषु तद्वत् ।
श्रुतिपथगलितानां वर्णधर्मं घृणाब्धिः
श्रुतिपथनिरतानां नैव तत्सेवनीयम् ॥

श्रुतिपथनिरतानामाश्रमा[2] यद्वदुक्ताः
परगुरुरखिलेशस्तद्वदाहाश्रमांश्च ।
श्रुतिपथगलितानां मानुषाणां तु तन्त्रं
हरिरपि मुनिमुख्यः[3] प्राह तन्त्रे स्वकीये ॥

विधिरपि मनुजानामाह वर्णाश्रमांश्च
श्रुतिपथगलितानामेव तन्त्रे स्वकीये ।
श्रुतिपथनिरतानां ते न[4] संसेवनीयाः[5]
श्रुतिपथसममार्गो नैव सत्यं मयोक्तम् ॥

हरहरिविधिपूजा कीर्तिता सर्वतन्त्रे
श्रुतिपथनिरतानां यद्वदुक्ता तु पूजा ।
श्रुतिपथगलितानामेव तन्त्रोक्तपूजा
श्रुतिपथनिरतानां सर्ववेदोदितैव ॥

श्रुतिपथगलितानां सर्वतन्त्रेषु लिङ्गं
प्रथितमखिलदुःखध्वंसकं तत्र तत्र ।
श्रुतिपथनिरतानां तत्सदा नैव धार्यं
श्रुतिरपि मनुजानामाह लिङ्गं विशुद्धम् ॥

शिवागमोक्ताश्रममानवस्
त्रिपुण्ड्रलिङ्गं तु सदैव[6] धारयेत्[7] ।
तदुक्तमन्त्रेण ललाटमध्यमे
महादरेणैव सितेन भस्मना ॥

---

१. परगुरुरखिलेशः A
२. माश्रया B
३. मुख्याः B
४. स्वेन B
५. संसेवनीयः A
६. त सदेव B
७. धारयत् B

विष्ण्वागमोक्ताश्रमनिष्ठमानवम्
तथैव पुण्ड्रान्तरमूर्ध्वरूपकम् ।
त्रिशूलरूपं चतुरस्रमेव वा
मृदा ललाटे[1] तु सदैव[2] धारयेत् ॥
ब्रह्मागमोक्ताश्रमनिष्ठमानवो[3]
ललाटमध्येऽपि च वर्तुलाकृतिम् ।
तदुक्तमन्त्रेण सितेन भस्मना
मृदाऽथवा चन्दनतस्तु धारयेत् ॥
अश्वत्थपत्रसदृशं हरिचन्दनेन
मध्ये ललाटमतिशोभनमादरेण ।
बुद्धागमे मुनिवरो[4] यदि संस्कृतः स्यात्
मृद्वारिणा सततमेव तु धारयेत् सः ॥
ऊर्ध्वपुण्ड्रत्रयं नित्यं धारयेद् भस्मना मृदा ।
ललाटेऽर्हागमे निष्ठश्चन्दनेनाऽथवा नरः ॥
सितेन भस्मना तिर्यक् त्रिपुण्ड्रस्य तु धारणम् ।
सर्वागमेषु निष्ठानां तत्तन्मन्त्रेण शोभनम् ॥
शिवागमेषु निष्ठानां धार्यं तिर्यक् त्रिपुण्ड्रकम् ।
एकमेव सदा भूत्या नैव पुण्ड्रान्तरं बुधाः ॥
वेदमार्गैकनिष्ठानां वेदोक्तेनैव वर्त्मना ।
ललाटे भस्मना तिर्यक् त्रिपुण्ड्रं धार्यमेव हि[5] ॥
विना पुण्ड्रान्तरं मोहाद् धारयन् पतति द्विजः ।
विष्ण्वागमादितन्त्रेषु शिक्षितानां विधीयते ॥
शङ्खचक्रगदापूर्वैरङ्कनं नाऽन्यदेहिनाम् ।
दीक्षितानां तु तन्त्रेषु नराणामङ्कनं द्विजाः ॥
उपकारकमेवोक्तं क्रमेण मुनिपुङ्गवाः ।
पुण्ड्रान्तरस्य तन्त्रेषु धारणं दीक्षितस्य तु ॥
वेदमार्गैकनिष्ठस्तु मोहेनाऽप्यङ्कितो यदि ।
पतत्येव न सन्देहस्तथा पुण्ड्रान्तरादपि ॥

---

१. ललाठे B
२. सेदव B
३. ब्रह्मागमोक्तागमनिष्ठमानवो A, ब्रह्मागमोक्ताप्रमनिष्टमानवो B
४. मुनिवरा B
५. A reads त्रिपुण्ड्रस्य तु धारणम् in place of त्रिपुण्ड्रं धार्यमेव हि

तन्त्रोक्तेन प्रकारेण देवता या प्रतिष्ठता ।
साऽपि वन्द्या सुसेव्या च पूजनीया च वैदिकैः ॥
शुद्धमेव हि सर्वत्र देवतारूपमास्तिकाः ।
तत्तत्तन्त्रोक्तपूजा तु[1] तत्तन्निष्ठस्य केवलम् ॥
तन्त्रेषु दीक्षितो मर्त्यो वैदिकं न स्पृशेत् सदा ।
वैदिकश्चाऽपि तन्त्रेषु दीक्षितं न स्पृशेत् सदा ॥
राजा तु वैदिकान् सर्वान् तान्त्रिकानखिलानपि ।
असङ्कीर्णतया नित्यं स्थापयेन्मुनिसत्तमाः[2] ॥"

(सूतसंहितायाम्, यज्ञवैभवखण्डोपरिभागे, सूतगीतायाम्, ८.२४, २६-४३, ४५-४७)

इत्यादि । 'तथा पुण्ड्रान्तरादपि' इति स्मृतिविरुद्धवेणुपत्राद्याकार[3]-तिलकाद् इत्यर्थः । अत एव **वासिष्ठलैङ्गे**[4] नवमेऽध्याये—

"अश्रौतमूर्ध्वपुण्ड्रादि ललाटे श्रद्धया सह ।
धारयिष्यन्ति[5] मोहेन[6] युगान्ते समुपस्थिते ॥"

इति श्लोके अश्रौतमिति विशेषणम् । **पाराशरे** तृतीयाध्यायेऽपि—

"त्रिशूले चतुरस्रे च वेणुपत्रोपमे तथा ।
पुण्ड्रान्तरे रता नित्यं भवेयुस्तान्त्रिका द्विजाः ।"

(पराशरोपपुराणे, ३.२७)

इति शापपरे श्लोके त्रिशूल-इत्याद्युक्तम् अन्यथा पुण्ड्रान्तरेत्यनेनैव गतार्थं स्यात्[7] । **ब्रह्माण्डपुराणेऽपि**—

"सप्त-षट्-पञ्चभिः पुण्ड्रं मध्यमं त्रिविधं स्मृतम्[8] ।
दशाङ्गुलप्रमाणं तु उत्तमोत्तममुच्यते[9] ॥

---

१. पूजासु A
२. मतमुत्तमम् A
३. वेणुयात्राद्याभाद B
४. वासिष्ठे लैङ्गे A
५. धारयिष्यं B
६. B omits मोहेन
७. गतार्थत्वात् A
८. मतं B
९. उत्तमोत्तम उच्यते B

नवाङ्गुलं मध्यमं स्यादष्टाङ्गुलमतः परम् ।
चतुस्त्रिद्व्यङ्गुलैः पुण्ड्रं कनिष्ठं त्रिविधं भवेत् ॥"

अत्र हि अङ्गुलान्न्यूनं[1] न धार्यमिति प्रतीयते । अत एव ब्रह्मपुराणे—

"त्यागो[2] दानं तपो होमः स्वाध्यायः पितृतर्पणम् ।
भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम् ॥
ऊर्ध्वपुण्ड्रं मृदा कुर्यात् त्रिपुण्ड्रं भस्मना सदा ।"

इत्युक्तम् । पारिजाते शौनकः —

"ऊर्ध्वपुण्ड्रं शिवस्यैवं कुर्युर्विष्णोश्च वा बुधाः ।"

इति । तत्रैव—

"त्रिपुण्ड्रेन विना येन विप्रेण यदनुष्ठितम् ।
न तद् ध्यानं न तज्ज्ञानं न तद्दानं तपो न सः[3] ॥"

इत्यादि । ऊर्ध्वपुण्ड्रत्रिपुण्ड्रयोः समुचितयोर्[4] एकैकस्य वा धारणं कर्तव्यमिति त्रिकोटिको विकल्पः । स च कुलाचारादिनाऽथ व्यवतिष्ठत इति ब्रह्मपुराणादौ स्पष्टम् । प्रकृतमनुसरामः । इत्थं श्रुतिभ्रष्टानामागमेष्वधिकारः सिद्धः । तथा सङ्करजानामप्यधिकारः कौर्मे द्वात्रिंशेऽध्याये दर्शितः —

"अथांशोः[5] सात्वतो[6] नाम विष्णुभक्तः प्रतापवान् ।
महात्मा दाननिरतो धनुर्वेदविदां वरः ॥
स नारदस्य वचनाद् वासुदेवाऽर्चने रतः ।
शास्त्रं प्रवर्तयामास कुण्डगोलादिभिः श्रितम् ॥
तस्य नाम्ना तु विख्यातं सात्वतं नाम शोभनम् ।
प्रवर्तते महाशास्त्रं कुण्डादीनां हितावहम् ॥"

(कूर्म०, पूर्व०, २४.३०-३२)

---

१. गुलान्न्यूनं B
२. यागो B
३. रस B
४. समुच्चितयो B
५. अपांशोः A
६. सात्त्वतो A

स्त्रीशूद्राऽधिकारो भागवते दशमस्कन्धे दर्शितः---

''तेनोक्तं सात्वतं[1] तन्त्रं यज्ज्ञात्वा मुक्तिभाग् भवेत् ।
यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः ॥''

इति । हेमाद्रौ प्रायश्चित्तकाण्डे पद्मपुराणवचनमुदाहृतम्—

''शृणु राम महाबाहो लिङ्गचक्रादिधारिणाम्[2] ।
शूद्रधर्मरतानां हि तेषां नाऽस्ति पुनर्भवः ॥
विप्रस्यैतद् विगर्ह्यत्वात् प्रायश्चित्तमुदीरितम् ॥''

इति । अत्र[3] 'शूद्रधर्मरतानाम्' इत्यनेन कुण्डगोलकयोरप्यधिकारो लभ्यते । 'शूद्राणां हि सधर्माणः सर्वेऽपध्वंसजाः स्मृताः' इति स्मृत्या तेषां शूद्रधर्मातिदेशात् । शूद्राणां तु तद्धर्मरतत्वं स्पष्टमेव । किञ्च स्वधर्मत्यागेन शूद्रधर्मरतानां द्विजानामपि पतितानामनेनाऽधिकारः । 'विप्रस्य' इति स्वधर्मस्थस्येति भावः । इतरस्य पूर्वार्द्धेनाऽधिकारलाभात् । ब्रह्मपुराणे दशमेऽध्याये—

''तप्तमुद्रा ह्यन्त्यजाय हरिणा निर्मिता पुरा ।
भूदेवस्तप्तमुद्रां तु चिह्नं कृत्वा विमूढधीः ॥
इह जन्मनि[4] शूद्रः स्यात् प्रेत्य श्वा च भविष्यति ॥''

इति । आश्वलायनस्मृतौ षष्ठेऽध्याये---

''शिवकेशवयोश्चिह्नं[5] चक्रशूलादिकं द्विजः ।
न धारयेत् मतिमान् वैदिके वर्त्मनि स्थितः ॥
त्यक्तवैदिककर्माणो[6] नास्तिका नटनर्तकाः ।
ते धारयेयुश्चिह्नानि शिवयोर्भिन्नबुद्धयः ॥
वेदाक्षरविहीनानां नास्तिकानां द्विजन्मनाम् ।
विहितं धारणं नित्यं चिह्नानां केशवेशयोः ॥
तेषां भिन्नधियां[7] किञ्चित् सुगत्यर्थे शिवः पुरा ।
कृपया तच्चकारेह पुराणेषूदितं च तत् ॥''

---

१. सात्त्वतं A
२. धारिणम् B
३. A omits अत्र
४. जन्मुनि
५. चिह्ने A
६. त्यक्तवैदिकर्माणो B
७. भिन्नधियं B

इति। किञ्चिदिति तन्त्रमित्यर्थः। इहेति स्मृतिष्वित्यर्थः। चकारो[1] भिन्नक्रमः पुराणेषु चेति योज्यः। अतएव स्मृतिपुराणयोरपि। क्वचित्तन्त्र[2]—समानविषयत्वं पराशरपुराणे दशमेऽध्याये स्पष्टीकृतम् —

"वेदमूलतया नित्यं प्रवृत्ता अपि सत्तम।
क्वचित् कदाचित् स्मर्तारस्तन्त्रार्थं च ब्रुवन्ति वै॥
क्वचित् तन्त्रानुरोधेन धर्मं पौराणिका अपि।
वदन्ति तादृशोंऽशस्तु ग्राह्यस्तन्त्रावलम्बिना॥
पुराणे धर्मशास्त्रे च योंऽशः श्रुत्या विरुध्यते।
स तन्त्रार्थस्तु[3] विज्ञेयः समासेन मनीषिभिः॥"
(पराशरोपपुराणे, १०.७१-७३)

इति। स्कान्देऽपि

"तन्त्राऽवलम्बनेनैव पुराणानि च कानिचित्।
साक्षाद् वेदविरुद्धार्थं प्रवदन्ति क्वचित् क्वचित्॥
अधिकारिविभेदेन नैव वेदपरं प्रति[4]।"

इति। अधिकारीति भ्रष्टाद्यधिकारीत्यर्थः। अत एव वैदिकान् प्रति तप्तमुद्रादे[5]र्निषेधकं तद्धारणे प्रायश्चित्तविधायकं[6] प्रायश्चित्ता[7]ऽननुष्ठाने नरकादिबोधकं च वचनसहस्रं तत्र तत्रोपलभ्यते। दिङ्मात्रन्तु प्रदर्शयामः। बृहन्नारदीये चतुर्दशाऽध्याये[8]—

"यस्तु सन्तप्तशंखादि[9]लिङ्गचिह्नतनुर्नरः।
स सर्वयातनाभोगी चाण्डालः[10] कोटिजन्मसु॥

---

१. चकारा B
२. क्व चित्तन्त्र A, क्वचित्तंत्र B
३. तन्त्रान्नर्थस्तु A
४. वेदप्ररपतीति B
५. तप्तमुद्राद्रे B
६. A omits प्रायश्चित्तविधायकं
७. प्रायश्चिता A
८. चतुर्थाऽध्याये A
९. शंखारि B
१०. चण्डालः A B

यं[1] द्विजं तप्तशंखादिलिङ्गाङ्कितततनुं नृप ।
सम्भाष्य रौरवं याति[2] यावदिन्द्राश्चतुर्दश ॥
चक्राङ्कित[3]—तनुर्यत्र तत्र[4] कोऽपि न संवसेत् ।
यदि तिष्ठेन्महापापी सहस्रब्रह्महा भवेत् ॥
गंगास्नानरतो वाऽपि अश्वमेधरतोऽपि[5] वा ।
चक्राङ्कित[6]—तनुं स्पृष्ट्वा पश्येत् सूर्यं जपन्नरः[7] ॥
चक्राङ्कित[8]—तनुं दृष्ट्वा पश्येत् सूर्यं जपेन्नरः ।[9]
जनेशपौरुषं सूक्तमन्यथा रौरवं व्रजेत् ॥
लिङ्गाङ्कितततनुं दृष्ट्वा पश्येत् सूर्यं नरेश्वर ।
जपेच्च शतरुद्रीयमन्यथा रौरवं व्रजेत् ॥
ब्राह्मणस्य तनुर्ज्ञेया सर्वदेवसमाश्रिता ।
सा चेत् सन्तापिता राजन् किं वक्ष्यामि तदेनसः ॥
चक्राङ्कितततनुर्वाऽपि राजन् लिङ्गाङ्कितोऽपि वा ।
नाधिकारी परिज्ञेयः श्रौतस्मार्तेषु कर्मसु ॥"

यज्ञवैभवखण्डे एकचत्वारिंशेऽध्याये—

"पाशाङ्कुशगदादण्डशङ्खचक्रादिभिर्द्विजाः ।
अङ्कनं विग्रहे सन्तः पातकं प्राहुरास्तिकाः ॥

(सूतसंहितायाम्, यज्ञवैभवखण्डे, ४१.१६)

हेमाद्रौ प्रायश्चित्तकाण्डे वायुपुराणे—

"ब्राह्मणो यदि मोहेन तापयेद् वह्निमुद्रया ।
न कर्मार्हो भवेदज्ञः[10] स वै पापण्डसंज्ञकः[11] ॥"

---

१. ये A
२. यान्ति A
३. चक्रांकिक B
४. क B
५. धरतोऽपि वा B
६. चक्रांकिक B
७. B reads रौरवं युगमश्रुतो in place of जपन्नरः ।
८. चक्राङ्गिक B
९. A omits this line
१०. भवेदत्र B
११. पाखंडसंज्ञिकः B

लिङ्गपुराणे —

"शङ्खचक्रे तापयित्वा यत्र देहे प्रदह्यते ।
स जीवन् कुणपस्त्याज्यः[1] सर्वधर्मबहिष्कृतः ॥"

आदित्यपुराणे—

"देवेषु यज्ञभागेषु यस्य नाऽस्त्यधिकारिता ।
स तापयित्वा चक्रादीन् धारयेत् स्व[2]-भुजद्वये ॥
ब्राह्मणो यदि मोहेन धारयेत् तप्तमुद्रिकाः ।
तस्य दर्शनमात्रेण कुर्यात् सूर्यावलोकनम् ॥"

वह्निपुराणे[3]—

"पूर्वजाततनुं[4] दग्ध्वा शङ्खचक्रादिभिः पृथक् ।
न तस्य निष्कृतिर्दृष्टा स्नानदानजपादिभिः ॥
तस्य निष्कृतिरुत्पन्ना पाराशर्येण[5] भाषिता ।
केशान् स वापयित्वा[6] तु पुनः कर्म समाचरेत् ॥
गर्भगोलात्[7] समुद्धृत्य गर्भाधानादिपूर्वकम् ।
षष्ठ्यावृत्त्यैव कृच्छ्राणां प्रायश्चित्तमुदीरितम् ॥

कौर्मे—

"अज्ञात्वा मखजेभ्यस्तु[8] मुद्रादग्धेभ्य आदरात् ।
सुवर्णमात्रसंग्राही प्राजापत्यं समाचरेत् ॥"

मानवोपपुराणे चतुर्दशाऽध्याये[9]—

"आयुधैः शङ्खचक्राद्यैर्न दहेच्च कदाचन ।"

---

१. स जीवकुणपन्त्याज्यः B
२. स्वे A
३. A omits वह्निपुराणे
४. पूर्वजस्य तनुं B
५. पराशर्येण B
६. संवापयित्या A
७. गर्भगोलान् A
८. मुखजेभ्यस्तु B
९. चतुर्दशेऽध्याये A

**इति । पाराशरपुराणे सप्तमेऽध्याये—**

"न दाहयेद् द्विजश्रेष्ठं न दहेच्चक्रपूर्वकैः ।
अङ्कितो यः स्वदेशात् तं राजा शीघ्रं विवासयेत् ।।
अत्यन्तपतितानां हि श्वपदाद्यङ्कनं[1] नृणाम् ।
विधीयते न शुद्धानामतः[2] शुद्धं न वाऽङ्कयेत्[3] ।।
अध्यापने चाऽध्ययने श्रौतस्मार्तेषु कर्मसु ।
सम्भाषणे च सम्वन्धे[4] नाऽधिकारी हि लाञ्छितः ।।"

(पराशरोपपुराणे, ७.१७, १८, २७)

**प्रयोगपारिजात-पृथ्वीचन्द्रोदयादिनिवन्धेषु विष्णु[5]-शातातपहारीतादिवचनान्युदाहृतानि । तद्यथा विष्णुः —**

"शङ्खचक्राद्यङ्कनञ्च गीतनृत्यादिकं तथा ।
एकजातेरयं धर्मो न जातु स्याद् द्विजन्मनः ।।
यथा श्मशानजं काष्ठमनर्हं सर्वकर्मसु ।
तथा चक्राङ्कितो विप्रः सर्वकर्मसु गर्हितः ।।
शङ्खचक्रं मृदा यस्तु कुर्यात् तप्तायसेन वा ।
स शूद्रवद् वहिष्कार्यः[6] सर्वस्माद् द्विजकर्मणः ।।"

**शातातपः —**

"अङ्गेषु नाऽङ्कयेद् विप्रो देवतायुधलाञ्छनैः ।
अङ्कयेद् यदि वा मोहात् पतत्येव न संशयः ।।"

**हारीत —**

"रागसन्दग्धगात्राणां न स्यात् पारत्रिकं[7] शुभम् ।

**बौधायनः—**

"नाऽङ्कनाय दहेद् देहं[8] दहेच्चेत् कामकारतः[9] ।
नाऽधिकुर्वन्ति दग्धाङ्गाः श्रौतस्मार्तेषु कर्मसु ।।"

---

१. चक्रप्रद्याङ्गनं A
२. शुद्धानमतः A, शुद्धानां आतः B
३. वञ्चयेत् A
४. सम्वन्धो B
५. विष्णुः A
६. वहिः कार्यः AB
७. पावित्रकं A
८. गात्रं A
९. काकनारतः B

**यमः**—

"नाऽङ्कनाय दहेद् गात्रं देवतायुधलाञ्छनैः ।
दहनाल्लेखनाद् विप्रः पातित्यं याति तत्क्षणात् ॥"

इत्यादि । **पाराशरमाधवीये**—

"चक्राङ्कितततनुर्यस्तु मृदा कार्ष्णायसेन वा ।
स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥"

इत्यादि । तदयं निर्गलितोऽर्थः—अष्टादीनामेवागमोक्तदीक्षायामधिकारः । तप्तमुद्रादिविधिप्रशंसादिकमपि तद्विषयम् । निषेधास्तु वैदिकविषयका इति । यत्तूक्तं नृसिंहपरिचर्यायाम्—"शिवलिङ्गाऽङ्कितवृषवदन[1]त्याधीनतायै तप्तचक्रादि धारयेत्", तन्न श्रुतयः*:—

"यो ह वै[2] सुश्लोकमौलेर्धर्माननुतिष्ठमानोऽग्निना चक्रं धत्तेऽग्निर्वै सहस्रारः । सहस्रारो नेमिर्नेमिना तप्ततनूः सायुज्यं सलोकतामाप्नोति' इति ।

"चक्रं बिभर्ति वपुषाऽभितप्तं[3] वलं देवानाममृतस्य विष्णोः ।
स एति नाकं[4] दुरिता[5] विधूय विशन्ति यद्यतयो वीतरागाः ।"

इति । **ऋक्परिशिष्टे**—

"अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत्समाशत ।"
(ऋग्०, ६.८३.१)

**यजुष्षु**—

"प्र ते विष्णो अब्जचक्रे सुतप्ते जन्माम्भोधि ततवे चर्षणीन्द्राः
मूले बाह्वोर्दधतेऽन्ये पुराणलिङ्गान्यङ्गे तप्तायुधान्यर्पयन्तः ।"

---

१. वदनै B
२. A omits वै
३. भिन्नं A
४. नाकुं B
५. डयिता A, डरिता B

* Vedāntadeśika quotes these passages in his Saccaritra-rakṣā (p. 43, kāncheepuram Ed.)

—**साम्नि च**—'अग्निर्वै सहस्रारः···सलोकतामाप्नोतीत्युपनिषदिति ।'

—**ऋग्वेदखिले**—'चक्रं बिभर्ति··वीतरागा' इति ।

—**त्रिष्वपि वेदेषु**—'पवित्रं ते···अतप्ततनूर्न समासते' इति ।

—**ऋचि बाष्कलशाखायाम्**—'प्र ते विष्णो · तावकान्यर्पयन्ति' इति ।

इति । वायुपुराणे—

'अग्निनैव तु सन्तप्तं चक्रमादाय वैष्णवः ।
धारयेत् सर्ववर्णानां हरिसालोक्यसिद्धये ॥'

इति । ब्रह्माण्डे—

'कृत्वा धातुमयीं मुद्रां[1] तापयित्वा स्वकां तनुम् ।
चक्रादिचिह्नितां भूप धारयेद् वैष्णवो नरः ॥'

इति । नारदीयपञ्चरात्रे—

'द्वादशार[2] तु षट्कोणं वलयत्रयसंयुतम्[3]
हरेः सुदर्शनं तप्तं धारयेत् तद्विचक्षणः ॥'

इति । न चैतत्सर्वं ब्राह्मणेतरवर्ण[4]—विषयकमिति शङ्कनीयम् । सौपर्णे तप्तचक्रादिधारणं प्रकृत्य 'अत्राधिकारिणं ब्रूहि' इति गरुडेन पृष्टो भगवानाह—

'गरुत्मन्नविशेषेण सर्ववर्णेष्वयं विधिः ।
विप्रो वा यदि वा[5] क्षत्रो वैश्यश्शूद्रस्तथैव च ॥
अन्ये सङ्करजाताश्च चक्राङ्का मम वल्लभाः ।'

तथा परिशिष्टं तप्तचक्रादीनि प्रकृत्य[6]

'देवासो यत्र विततेन बाहुना सुदर्शनेन प्रयताः[7] स्वर्गमायन् । येनाङ्किता मनवो लोकसृष्टिं वितन्वते, ब्राह्मणास्तद् वहन्तीति[8] ।'

तान्येव प्रकृत्य पाद्मे —

'उपवीतादिवद्धार्याः शंखचक्रादयस्तथा[9] ।
ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ।'

---

१. मुदां B
२. हादशारं B
३. वलयसंयुतम् B
४. ब्राह्मणेतरवर्णे B
५. B omits यदि वा
६. तप्तचक्रादिविप्रकृत्य A
७. प्रयता B
८. तद्दहन्तीति A, तदहन्तीति B
९. शंखचक्रादिभिस्त्वथा B

इति श्रुतिस्मृत्योर्ब्राह्मणाधिकारताऽवगमात् । अधारणे निषेधश्च निन्दार्थवादगम्यो[1] नारदीये—

'श्रीकृष्णशस्त्राङ्क[2]विहीनगात्रः
श्मशानतुल्यः पुरुषोऽथ नारी ।
दृष्ट्वा नरं तं नृपते सवासाः
स्नात्वा समर्चेद् हरिमङ्गनित्यम् ।।'

पाद्मे—

'तप्तचक्राङ्कितं दृष्ट्वा ये निन्दन्ति नराधमाः ।
अवलोक्य मुखं तेषामादित्यमवलोकयेत् ।।

अग्निपुराणे

'दशरथेन शूकरादिबुद्धया विद्धे श्रवणे तदाज्ञया जलकमण्डलुमादाय अवदतैव राज्ञा तत्पित्रोः पानीयेऽर्प्यमाणे 'हा[3] श्रवण, विलम्बितम्[4], किं न वदसि रे श्रवण' इति सघृणमभिलाषयातनान्धे[5] जरति जनके चाण्डालोऽहं दशरथो ब्रह्महन्ता, श्रवणस्तु लोकान्तरे मिलिष्यतीति कालाहिगरतुलितं राजवचनमाकर्ण्य सोरस्ताडमुच्चैर्विलप्य मूर्च्छामनुभूय चिरात्प्रबुध्य[6] दीर्घमुछ्वस्य श्रवणपित्रा सशब्द[7] मुक्तम्—

'शिलाबुद्धिः कृता किं वा प्रतिमायां हरेर्मया ।
किं मया पथि दृष्टस्य विष्णुभक्तस्य कर्हिचित् ।।
तन्मुद्राङ्कितदेहस्य चेतसाऽनादरः कृतः ।
येन कर्मविपाकेन पुत्रशोको ममेदृशः ।।'

इति । अतो निःशङ्कं तप्तचक्रादीनि धारयेत् । उक्तञ्च **सौपर्णे**—

'अशुचिर्वाप्यनाचारः सर्वधर्मबहिष्कृतः ।
प्रतप्तशंखचक्राभ्यामङ्कितः पंक्तिपावनः ।।'

इति धारणनिषेधवचनानि श्रुतिस्मृतिपुराणेतिहासार्षकाव्यादिषु लिखितानि **न पश्यामः**[8], दुर्जनस्मार्तकल्पितानि तु—

१. निन्दार्थगवादगम्यो B
२. शस्त्राङ्ग B
३. ह B
४. विलं विलंवितं B
५. सघृणमभिभावमाणे यातनान्धे A
६. प्रबुध्ये B
७. सशप्त B
८. पश्यतु A

'पतिव्रता या न करोति जारतां
सा[1] व्याधयोनिं नियतं विजह्यात् ॥'

इत्यादिवत्प्रमत्तभाषितानीत्युपेक्षणीयानि । यत्तु ब्रह्मगीतायां वचनम्—

'वज्रचक्रगदादीनि निजाङ्गेषु द्विजोत्तमाः ।
नित्यं सन्धारयिष्यन्ति पाखण्डोपहताः कलौ ॥'
(सूतसंहितायाम्, यज्ञवैभवखण्डे, ब्रह्मगीतायाम्, ३)

इति तद्वज्रसमभिव्याहृतचक्रादिविषयमिति मन्तव्यम् । एवमन्येष्वपि समूलेषु विषयव्यवस्था कल्प्या । अशक्यायां व्यवस्थायां तु समूलत्वे च दृढे उदितानुदितहोमवद् वैष्णवाऽवैष्णवभेदेन व्यवस्थितो विकल्प आश्रयणीयः । सर्वथा वैष्णवानामत्यावश्यकं[2] तप्तचक्रादिधारणम् । ये तु अङ्गदाहस्य निषिद्धत्वेन तत्करणे प्रायश्चित्तं कर्तव्यमिति ब्रुवते तैरप्राप्तमीमांसाक्षारमसी[3]— गन्धैर्गृहिणो मुण्डनस्य निषिद्धत्वेन दीक्षाङ्गकेशश्मश्रुवपनकरणे पर्षदमभ्यर्थ्य राजदण्ड[4]— ब्रह्मदण्डपुरस्सरं गोमयोपलिप्तशरीरैर् गलच्चीरचिकुरै[5]श्चतुष्पथे दण्डवत पतित्वा प्रायश्चित्तं प्रष्टव्यम् । अतः कस्याश्चिन्निजपतिसेवामुज्झित्य विपणिसरणौ दर्पणपाणेः कुङकुमसिन्दूरादिनिर्माणवद् रमारमणभजनमपहाय धनिधनापहाराय कर्मकौशलैकजीविनाम् अवलोकनमपि महीयसे नरकपातायेति तत्सम्भाषणप्रसङ्गत उपरम्यत इति । अत्रेदं वक्तव्यम्—यदुक्तम् 'वृषवद्' इति, तत्तथैव । श्रुतिस्मृतितात्पर्याऽनभिज्ञस्य पशुकल्पत्वात्[6] । नहि[7] त्वदुदाहृतैर्वचनैस्त्वदिष्टं सिध्यति । तथाहि यत्तावत् 'यो ह वै' इति वचनमुदाहृतं तच्छतपथश्रुतिस्थमिति रामार्चनचन्द्रिकाकारादीनां त्वदीयानां सम्मतम् । न च तच्छतपथब्राह्मणे उपलभ्यते । किञ्च नेह विधिः श्रूयते । अपि च पतितादिविषयकमेवेदम्, प्रागुदाहृतस्मृत्यादिबलात् । न च स्मृत्या श्रुतेः सङ्कोचोऽनुपपन्न इति वाच्यम् । विशेषविषयिण्या स्मृत्या सामान्यश्रुतेः सङ्कोचस्य सर्वसम्मतत्वात् । अन्यथा पतितस्याऽप्यग्निहोत्रप्रसङ्गात् । कलावपि नरमेधाश्वमेधादेः[8] प्रसङ्गाच्च । तत्र यदि पतितानां कर्माऽनधिकारबोधकस्मृत्या नरमेधाश्वमेधकाविति कलिनिषिद्धपरिगणनस्मृत्या च अग्निहोत्राऽश्वमेधादिश्रुतीनां सङ्कोच इति ब्रूषे, तर्हि प्रकृतेऽपि तुल्यम् । एतेन 'चक्रं बिभर्ति' इत्यादित्वदुदाहृत-

———————

१. B omits सा
२. वैष्णवानामित्त्यावश्यक B
३. भारमषी B
४. राजदंह B
५. गलवीरचिकुरै B
६. पशुकत्वात् B
७. तथाहि A
८. नरमेधाश्वमेधादि A

वचनमपि गतार्थम्। यदप्युक्तं ऋक्परिशिष्टम् इति। तत्र नेदं परिशिष्टम्। किन्तु सप्तमाष्टके पठ्यत[1] इति तावद् वैदिकेभ्यो गृहाण। किञ्च नाऽस्य त्वदभिमतोऽर्थः सम्भवति। इदं हि त्वदुपजीव्यैर् माध्वैरित्थं व्याख्यातम्---

''पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः।
अतप्ततनूर्नं तदामो अश्नुते शृतास इद्वहन्तस्तत्समाशत॥[2]

(ऋक्: ९.८३.१)

इति ऋङ्मन्त्रः। ब्रह्मणः[3] वेदस्य चतुर्मुखस्य ब्राह्मणजातेर्वा पते रक्षक इति विष्णुसम्बोधनम्। प्रभुस्त्वं विश्वतो विश्वेषां गात्राणि पर्येषि अन्तर्यामितया व्याप्नोषि। तादृशस्य ते तत्पवित्रं सुदर्शनम्। अर्थात्तेनेति लभ्यते अतप्तशरीरः आमः अदग्धपापः तद्ब्रह्म नाश्नुते[4] शृतासः पक्वाः वहन्त इति दाहजन्यकिणं[5] वहन्त एवं[6] तत्समाशत।

'पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनम्।
पर्यायवाचका ह्येते चक्रस्य परमात्मनः॥'

इति वचनाद्'' इति। न चैतद् व्याख्यानं प्रामाणिकम्[7]। तस्मिन्नुदीचीनदर्शनपवित्रं वितन्वन्ति 'पवित्रं ते विततं ब्रह्मणस्पते' 'वितन्यमानमभिमन्त्रयते यजमान' **इत्यापस्तम्बसूत्रेण।** उद्गातृभिर्द्रोणकलशे वितन्यमानस्य पवित्रस्याऽनुमन्त्रणे एतन्मन्त्रविनियोगात्। तथा च हे ब्रह्मणस्पते सोम ते तुभ्यं त्वत्पावनार्थमिदं दशापवित्रं विततमित्यर्थो भाष्यादिसम्मतः। यदि तु यथाकथञ्चिदक्षरार्थसम्भवमात्रेण तुष्यसि, तर्हि लिङ्गधारणादिकमपि किमिति न कुर्याः। पाशुपतागमोपबृंहणेन हि[8] केचिद् व्याचक्षते। तथाहि---

'ब्रह्मेति लिङ्गमाख्यातं ब्रह्मणस्पतिरीश्वरः।
पवित्रं तद्धि विख्यातं तत्सम्पर्कात्तनुः शुचिः॥'

---

१. पद्यन्त A
२. A omits इद्वहन्तस्तत्समाशत
३. ब्रह्मण B
४. नाश्नुते B
५. किनं B
६. इव B
७. व्याख्यानमप्रामाणिकम् A
८. न हि B

ऋगित्याह पवित्रं ते विततं ब्रह्मणस्पते ।
तस्मात्पवित्रं लिङ्गाख्यं धार्यं शैवमनामयम्[१] ॥
तेनाऽतप्ततनूरज्ञ' इत्यादिना
दीक्षया सहितः साक्षादाप्नुयाल्लिङ्गमुत्तमम्[२] ॥

इत्यन्तेनाऽगस्त्यं प्रति रेणुकेन पवित्रश्रुतिः[३] लिङ्गधारणपरतया[४] व्याख्याता[५]। तथा चाऽयमर्थः— ब्रह्मणस्पते लिङ्गस्याऽधिष्ठानं ते तवापवित्रं लिङ्गं विततम् प्रभुस्त्वं विश्वेषां गात्राणि पर्येषि व्याप्नोषि । विष्ण्वादिभिरपि त्वल्लिङ्गस्य धृतत्वात् । स्पष्टं चैतत् पाद्मे शिवराघवसंवादे । अतप्ता अक्लेशिता शिवदीक्षादिना तनूर्येन सः अमोऽपक्वान्तःकरणस्तल्लिङ्गं[६] नाऽश्नुते दुरदृष्टवशात्तद्धारणे न प्रवर्तत इत्यर्थः । वहन्तो लिङ्गं धारयन्त इत्यादि । अपि च 'सोमस्य धारापवते' (ऋक्० ९.८०.१) इत्युपक्रमात् शोचन्तोऽस्य[७] तन्तव इत्युत्तरत्र दर्शनात् पवमानसोमो देवतेत्यनुक्रमणिकावचनात् पूर्वोक्तापस्तम्बसूत्राच्च । शैववैष्णवोक्तौ द्वावप्यर्थाव सङ्गताविव । उच्छृङ्खलत्वे[८] तु तप्तमुद्रानिषेधपरैवेयं श्रुतिरिति गृहाण । तथा हि— हे ब्रह्मणस्पते ब्राह्मणोत्तम, हे ब्राह्मणेत्येव तु नोक्तं[९] पतितान् प्रति[१०] प्रतिषेधो नास्तीति सूचयितुम् । त्वं प्रभुः समर्थोऽसि । अनेन परप्ररोचनयापि[११] नाऽत्र प्रवर्तितव्यमिति सूचितम् । 'दर्शयित्वा फलानि तु (कूर्म०, पूर्व०, १६.१२४) इति कौर्मचतुर्दशाध्यायस्थवचनेन प्ररोचनयापि पाञ्चरात्रे प्रवर्तयतीत्युक्तम् । विश्वतो गात्राणि करचरणादिसर्वाङ्गानि विस्तीर्णं पवित्रं च यथा भवति तथा धारयसि । पावित्र्यं च 'यावतीर्वै देवता' इत्यादिश्रुत्यन्तरसंवादि । ततश्च पाञ्चरात्रादौ त्वया न प्रवेष्टव्यमित्याशयेनाह— आय[१२] विष्णवे तप्ता तनूर्येन स आमोऽपक्वान्तःकरण इत्यादि । न केवलं तप्ताङ्गानामिष्टाभावमात्रम् । किन्त्वनिष्टमप्यस्तीत्याह श्रृतासः[१३] तप्तमुद्रां वहन्तः । तत् श्रा-धात्वर्थभूतं[१४] पाकम्[१५] । अर्थात् कुम्भीपाका-

१. रौक्ममय A, शैवमनाभयम् B
२. मुत्पन्नम् B
३. श्रतिपेवित्र B, पवित्रश्रुति A
४. लिङ्गवारणपरतया A
५. व्याख्यानात् A
६. ऽपक्वान्तःकरणो नलिङ्गं
७. अस्य A B
८. उच्छृङ्खलत्वेन B
९. हे ब्राह्मणेत्येरैवेत्युक्तम् B
१०. B omits प्रति
११. परप्रचनयापि B
१२. आप B
१३. श्रुतीसस् B
१४. श्राध्यात्वर्थभूतं A
१५. पावकं B

दिरूपम् आशत[1] प्राप्नुवन्तीति । तप्तमुद्रा-निषेधकस्मृतिवचनजातं चात्रोपष्टम्भकम्[2] । सन्ति चाऽत्र मन्त्रवर्णाः । तद्यथा—

'इमे ये नार्वाङ्‌ न परश्चरन्ति न ब्राह्मणासो न सुतेकरासः ।
त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः ।।
(ऋग्०, १०.७१.९)

य एते दृश्यमाना अर्वाग्भागं[3] कर्मकाण्डरूपम् । परः शब्दो निपातितः । परः परमुपनिषद्भागं च न चरन्ति न परिशीलयन्ति । अतएव ब्राह्मणासो न ब्रह्मविदो न । ब्रह्म[4]'शब्दात्तदधीते तद्वेद' (अष्टा० ४.२.५९) इत्यण् । सुते अभिषुते सोमे करोऽधिकारो येषां तथाभूता अपि न त एते काण्डद्वयपरिभ्रष्टाः वाचं वागिन्द्रियम् अभिपद्यापि । पापया पापेन 'सुपां सुलुक्' (अष्टा० ७.१.३९) इत्यादिना यादेशः[5] । सिरीः बन्धकं षिञ् बन्धने औणादिको रीक् । तन्त्रं पाञ्चरात्रादिकं तन्वते तदुक्तमनुतिष्ठन्तीत्यर्थः । न प्रकर्षेण जानन्तीत्यप्रजज्ञयः । आदृगमेत्यादिना किकिनोरन्यतरः स्वरः[6] ; नञ्-तत्पुरुषे सति शिष्टत्वात् । अव्यय[7]- पूर्वपद-प्रकृतिस्वरः । वेदभ्रष्टान्[8] समुद्दिश्य कमलापतिरुक्तवानित्यादिप्रागुक्तवचनजातमिहोपबृंहकम् । तथा—

'प्रत्नान्मानादध्या ये समस्वरञ्छ्लोकयन्त्रासो रभसस्य[9] मन्तवः ।
अपानक्षासो बधिरा अहासत ऋतस्य पन्था न[10] तरन्ति दुष्कृतः ।'
(ऋक्, ९.७३.६)

ये कुपुरुषाः प्रत्नान्मानात् पुरातनाद् वेदरूपात् प्रमाणात्[11] । 'चिर[12]'परुत्परारिभ्यस्त्नः' (वा० ४.३.२३), 'नश्च पुराणे प्रात्' (वा० ५.४.२५) इति वार्तिकेन त्न-प्रत्ययः । अधि अधिकम्

---

१. आश A
२. जात्रोपभष्टकम् B
३. अर्वाग्मार्गं B
४. ब्रस B
५. पादेश B
६. B omits स्वरः ।
७. अथवा A
८. वेदभ्रष्टा B
९. श्लोकयन्त्राः सरभसस्य A, रसस्य B
१०. पन्थन्नन A
११. पुराणात् B
१२. विर B

आ समन्तात् कर्मकाण्डाच्चेत्यर्थः[1] । समस्वरम्[2] उपतापमुद्वेगं लब्धवन्तः । 'स्वृ शब्दोपतापयोः' श्लोकः पौरुषेयवाक्यं यन्त्रं नियामकं येषां तथाभूताः पाञ्चरात्राद्यागमावलम्बिनः इत्यर्थः । रभसस्य साहसस्य मन्तवः स्वीकर्तारः । 'कमिमनिजनि[3]-गाभायाहिभ्यश्च'(उणादि० ७२) इति । तुः । व्यत्ययादाद्युदात्तः । यद्वा चकारात्तुन् । किञ्च अनक्षासः अन्धा बधिराश्च[4] अतएव ऋतस्य पन्थानं[5] वेदम् अहासत[6] अपकृष्टं यथा भवति तथा त्यक्तवन्तः । त एते दुष्कृतः पापकर्माणः न तरन्ति । वाशिष्ठलैङ्गोक्तं शाण्डिल्योपाख्यानादिकं चाऽत्रोपबृंहकं बोध्यम् । तथा **ऋक्परिशिष्टे** —

'गोघ्नात् तस्करत्वात् स्त्रीवधाद् यच्च किल्बिषम् ।
पापकं च चरणेभ्यस्तत् पावमानीभिरहं पुनामि ॥'
(ऋक्० खिल० ५४६ पृ०)

इति चरणेभ्यश्शङ्खचक्रगदादिभ्यः । पवित्रं चरणं चक्रमिति त्वदीयैरेवोक्तेः । बहुवचनादाद्यर्थावगतिः । 'अर्धर्चाः पुंसि' (अष्टा०, २.४.३१) इत्यादिवत् । न च चक्रादीनामपापजनकत्वं धारणपरत्वे तु लक्षणा स्यादिति वाच्यम्, तद्धारणस्येव धार्यमाणानां तेषामप्यधर्मजनकत्वात् फलसाधारण्यप्रयोजकमात्रं पञ्चम्यर्थ इति भर्तृहरिप्रभृतिभिः सिद्धान्तितत्वाच्च । युक्तं चैतत्, चरणपदस्य दुराचारपरत्वे[7] लक्षणापत्तेः । गोघ्नादिवैयर्थ्यापत्तेश्च । गोवलीवर्दन्यायाश्रयणेऽतिक्लिष्टता । 'येनो गर्भं'[8] इत्यादिना गतार्थता च । तस्माद् गोहननादिनिषिद्धविशेषसाम्याच्चरणपदस्य[9] त्वद्रीत्या चक्रपरतैवोचितेति[10] दिक् । एतेन **यजुष्षु** इत्यादि 'अङ्कितोऽयं पंक्तिपावनः[11] इत्यन्तं परास्तम् । त्वदुक्तश्रुतिस्मृतीनां कथञ्चित्प्रामाणिकत्वाऽभ्युपगमेऽपि पतितब्राह्मणादिपरतया गतार्थत्वाच्च । त्वदुदाहृतयोरेव वायवीयब्रह्माण्डयोर्वैष्णवशब्दोपादानाच्च । आगमोक्तविष्णुदीक्षावान् हि वैष्णवः । दीक्षा च पतिताधिकारिके[12]-त्युक्तम् । यदपि[13] 'न पश्यामः' इत्यादि

---

१ कर्मकाण्डजावेत्यर्थः B
२. समस्वरन् B
३. जवि A B
४. अधिरा वंधाश्च B
५. पन्थं A, पथां B
६. अयाहासत B
७. दुराचारत्वे B
८. येन्मे गर्भ B
९. गोहननादिनिषिद्धविशेषप्रायणपाटाधरणपदस्य B
१०. चक्रपरतैवोचेति B
११. क्रियावान् A
१२. पतिताधिकारे B
१३. B omits यदपि

तदपि नाऽस्माकं बाधकम्, त्वदीयदर्शनाऽभावस्याऽकिञ्चित्करत्वात् । 'दुर्जनस्मार्तकल्पितानि' इति वदन् स्कान्दकौर्मादिपुराणेषु भाट्टादितन्त्रेषु हेमाद्रिमाधवपृथ्वीचन्द्रोदयादिनिबन्धेषु च[1] स्वस्याऽज्ञानमेव प्रकटितवान् । यदपि 'वज्रसमभिव्याहृतेति' तन्न, तस्याऽप्रसक्तत्वात् । इन्द्रागमे प्रविष्टस्य वज्रमेव प्राप्तं न तु शङ्खचक्रादि । उक्तं हि पाराशरोपपुराणे चतुर्थेऽध्याये—

'इन्द्रादिदेवताभक्तः तत्र निष्ठस्तथा स्थितः ।
ललाटे धारयेन्नित्यं वज्रपाशाङ्कुशादिकम् ॥'
(पराशरोपपुराणे, ४.१८.१६)

इति । यदपि 'वैष्णवाऽवैष्णवभेदेन' इति, वयं[2] तत्तथैव वैष्णवदीक्षा[3] परं[4] पतितादिविषयकेत्यवोचाम । यदपि 'ये तु' इत्यादि 'उपरम्यत' इत्यन्तं जल्पितं तदपि स्वस्यैव मीमांसावार्तानभिज्ञतां स्फुटयति । तथाहि पतिताद्यधिकारिकस्य वैदिकब्राह्मणान् प्रति विशिष्य[5] निषिद्धस्य चक्रादिदाहस्य प्रमादाद् वैदिकेनाऽनुष्ठाने वह्निपुराणाद्युक्तं 'षष्ठ्यावृत्त्यैव कृच्छ्राणां प्रायश्चित्तमुदीरितम्' इत्यादिकं न्याय्यमेव । अकृतप्रायश्चित्तैस्तु तैः सह सम्भाषणादिकं निषिद्धमेवेति पूर्वोदाहृतवचनपरिशीलनवतां स्पष्टम् । यदि तु निषेधवाक्यानां प्रायश्चित्तवाक्यानां 'पाञ्चरात्रान् पाशुपतान् वाङ्मात्रेणाऽपि[6] नाऽर्चयेद्' इत्यादिवाक्यानाञ्च प्रामाण्यमेव वक्तुमध्यवसितोऽसि तर्हि त्वदुक्तम्[7] अप्राप्तमीमांसाक्षरमषी[8]-गन्धत्वं[9] त्वय्येव[10] पर्यवस्यति । उक्तं हि भट्टपादैः—

'को हि मीमांसको ब्रूयाद् विरोधे वाक्ययोर्मिथः ।
एकं प्रमाणमितरदप्रमाणमितीदृशम् ॥'

इति । 'उज्झित्य' इति अपशब्दप्रयोगस्तु वेदवेदाङ्गबाह्यानामेवोचित इत्यलं बहुना । यदप्युक्तं विष्णुभक्तिचन्द्रोदये—

'नारायणायुधैर्युक्तं कृत्वाऽऽत्मानं कलौ युगे ।
कुरुते पुण्यकर्माणि मेरुतुल्यान्यसंशयम् ॥

---

१. B omits च
२. B omits वयं
३. वैष्णवदीक्षैव B
४. A omits परं
५. विशिष्ट B
६. वाङ्मात्रेऽपि B
७. त्वदुक्त B
८. मशी A
९. गन्धत्वमेव A
१०. A omits त्वय्येव

शङ्खादिकाङ्कितो भवत्या श्राद्धे यः कुरुते द्विजः ।
विधिहीनं[1] तु सम्पूर्णं पितॄणां तु गयासमम् ।।
यथाग्निर्दहते कक्षं वायुना प्रेरितो भृशम् ।
तथा दहन्ति पापानि दृष्ट्या कृष्णायुधानि वै ।।
विष्णुनामाङ्कितां मुद्रामष्टाक्षरसमन्विताम् ।
शङ्खादिकायुधैर्युक्तां स्वर्णरूप्य[2]-मयीमपि ।।
धत्ते भागवतो यस्तु कलिकाले विशेषतः ।
प्रह्लादेन समो ज्ञेयो नाऽन्यथा कलिवल्लभः ।।
यस्य नारायणी मुद्रा देहे शङ्खादिचिह्निता ।
धात्रीफलकृता माला तुलसी[3]-काष्ठसम्भवा ।।
द्वादशाक्षरमन्त्रैस्तु विनियुक्ता कलेवरे ।
आयुधानि च विप्रस्य मत्समः[4] स च वैष्णवः ।।
शङ्खाङ्किततनुर्विप्रो भुङ्क्ते यस्य च वेश्मनि ।
तदन्नं स्वयमश्नाति पितृभिः सह केशवः ।।
कृष्णायुधाङ्कितं दृष्ट्वा सम्मानं[5] न करोति यः ।
द्वादशाब्दार्जितं पुण्यं बाष्कलेयाय गच्छति ।।
कृष्णायुधाङ्कितो यस्तु श्मशाने म्रियते यदि ।
प्रयागे या गतिः प्रोक्ता सा गतिस्तस्य नारद ।।
कृष्णायुधैः कलौ नित्यं मण्डितो यस्य विग्रहः ।
तत्राश्रमं प्रकुर्वन्ति विबुधा वासवादयः ।।
यः करोति हरेः पूजां कृष्णचक्राङ्कितो हरः ।
अपराधसहस्राणि नित्यं हरति केशवः ।।'

इति ब्रह्मपुराणवचनानीति, तदपि समूलत्वे पूर्ववदधिकारिव्यवस्थापनेन गतार्थम् । प्रत्युत ब्रह्मपुराणे दशमेऽध्याये —

'तप्तमुद्राश्चाऽन्त्यजाय[6] हरिणा निर्मिता पुरा ।
भूदेवस्तप्तमुद्रां तु चिह्नं कृत्वा विमूढधीः ।।
इह जन्मनि शूद्रः स्यात् प्रेत्य श्वा च भविष्यति ।'

---

१. विधिहीनां B
२. स्वर्णरूपा B
३. तुसी B
४. मत्सगः B
५. संमानं A, सन्मानं B
६. तप्तमुद्रा ह्यन्त्यजाय B

इति स्पष्टमेव पठ्यत इति दिक् । यदपि विष्णुभक्तिचन्द्रोदये एव—

'अत्र ये वै[1] महात्मानः कर्मकौशलचेतसः ।
चक्रेण तापन देहे[2] पितृपूजादिने तथा ॥
आदौ नैवेद्यदानं च हरये दूषयन्ति च ।
अङ्गस्य हीनतां मत्वा कर्मणो नाशमेव च ॥'

तान् प्रति वक्तव्यम्—

'विषूच्यामतिवृद्धायां पाणिदाहः[3] प्रशस्यते ।
इत्यादि वैद्यशास्त्रेण दशधा दह्यते यदा ॥
न भवेत्तु कथं तेषां हीनताङ्गस्य वै तदा ।'

तदा तत्रैव वदन्ति—

'रोगैराक्रान्तदेहानां देहेभ्यो दाह इष्यते ।

तत्रोत्तरम्[4]—

'जरया[5]ऽऽक्रान्तदेहानां मरणे[6] दाह इष्यताम्[7] ।
न ब्रूमो हीनतामङ्गे न च कर्मविनाशनम् ॥
श्रुतिस्मृती[8] न पश्यामो येन ते न मतं ततः ।
श्रुतिस्मृती[9] शृणुध्वं वै श्रुत्यर्थनिरता[10] यतः ॥'

वायव्ये ब्रह्माण्डपुराणे च

'अग्निनैव तु सन्तप्तं[11] चक्रमादाय वैष्णवः ।
धारयेत् सर्ववर्णानां सार्ष्टिसालोक्यसिद्धये ॥'

———————

१. यैं वे B
२. देहि B
३. प्राणिदाहः B
४. न तत्रोत्तरम् B
५. मायया B
६. मरणं B
७. दाहयिष्यते B
८. श्रुति स्मृतिं B
९. श्रुति B
१०. निरतो A
११. सुसन्तप्तं A

इत्यादि लिखितं तत्सर्वमपि प्राग्वद् गतार्थमेव । किञ्च 'ते न मतं ततः' इत्यत्र त्वद्वाक्ये तयादेशः 'शृणुध्वं वै' इत्यात्मनेपदं चाऽशुद्धम् । न च 'येन' इति पदात् परत्वं गृहीत्वा आदेशनिर्वाहः । 'समानवाक्ये निघातयुष्मदादेशाः' (वा०, सू० ८.१.२३) इति कात्यायनवचनात् । न चैकवाक्यतास्तीति भ्रमितव्यम् ! 'एकतिङ् वाक्यम्' (वा० ८.१.२३) इति परिभाषणात् । स्पष्टं चेदं भाष्यादिपरिशीलनशालिनामिति दिक् । स्यादेतत् । वेदस्तन्त्रं चाऽधिकारिभेदेन व्यवस्थितं चेत्तर्हि मिश्रेकोऽधिक्रियताम्[१] । न च नाऽस्त्येव मिश्रपूजेति वाच्यम् । भागवते एकादशस्कन्धे सप्तविंशेऽध्याये—

'वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ।
त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥'
(भागवत०, ११.२७.७)

इति भगवद्वचनाद् इति चेद् अत्रोच्यते—पतितब्राह्मणादयस्तावन्मिश्रेऽधिकारिणः । तान् प्रति तन्त्रप्रवृत्ति[२]बोधकप्रमाणैस्तन्त्रोपात्तवैदिकमन्त्रप्रतिप्रसवलाभात् । स्वीकृतश्च निबन्धेषु ब्रह्मघ्नादीनामपि प्रायश्चित्ते प्रवर्तमानानां सन्ध्यावन्दनादावधिकारः । प्रसिद्धश्चाऽनेकवैदिकमन्त्रसाध्येऽश्वमेधे ब्रह्मघ्नस्याधिकारः । 'तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इति श्रुतेः ।

'अग्निष्टुता वाजपेयेनाऽश्वमेधेन क्षत्रियः ।
अन्यैश्च पावनैरिष्ट्वा ब्रह्महत्यां व्यपोहति ॥'

इति स्मृतेश्च । किञ्च स्त्रीणामप्युपनयनाऽध्ययनादि[३] कल्पान्तरेऽस्तीति माधवपारिजातादिनिबन्धेषु स्पष्टम् । तासां चाऽऽगमाधिकारितया मिश्रपूजा सम्भवत्येव । अपि च 'क्षत्रिया अपि' इति वचनात् तन्त्रोक्तपूजायामधिकारिणः ।

'श्रौतस्मार्ताऽऽगमञ्चेति द्विजानां तु त्रयं भवेत् ।
श्रौतार्चनं तु विप्राणां विशेषेण भवेत्तदा ॥
स्मार्तागमार्चनं क्षत्रे वैश्ये केवलमागमम् ।
तस्मादेवार्चनं[४] श्रौतं विप्रस्येति निगद्यते ॥

इति मन्त्रराजाऽनुष्टुब्विधानोक्तेः । स्पष्टं चैतत्पारिजाते । अत्र च स्मार्तस्याप्यनुमितश्रुतिमूलकतया स्मार्तागमशब्देन मिश्रपूजालाभसम्भवात् । किञ्च द्विजैर्जातानां कुण्डगोलकादीनां संस्कार्यता आगमाधिकारश्चाऽस्तीति तेऽप्यत्राधिकारिणः । सर्वथा पतितब्राह्मणानामागमेष्वधिकारः । 'अत्यन्तस्खलितानां तु' इत्यादिवचनात् । तथा च तादृशानामागमे प्रवेशः पातित्यापादक इति शापनिषेध-

---

१. कोऽधिकारी क्रियताम् A
२. प्रकृति A
३. ऽध्यापनादि A
४. तस्माद्देवार्चनं B

